इति गुरुसंज्ञया लघुसंज्ञाया बाधेनोद्देश्यासिद्ध्या गुरुलघुसंज्ञयोः समावेशस्यावश्यकत्वेन हृच्चधूमावित्यादौ लघुत्वेन पूर्वोक्तसमावेशपक्षोक्तदूषणस्यैव दुरुद्धरत्वमिति वाच्यम् । संयोगे परे दीर्घस्य गुरुसंज्ञाया अन्यथासिद्धत्वेन प्लुतस्य तत्संज्ञया फलाभावेन तत्राजित्युक्त्याऽपि निर्वाहेण लघुगुरुसंज्ञयोः समावेशे प्रमाणाभावात्, रामइच्छतीत्यादौ ह्रस्वात् तादाविति सामान्यापेक्षज्ञापनेन वारणेऽपि पूर्वोक्तातत्तक्षदित्यादिदोषो दुरुद्धर इत्यपि न, ज्ञापकसिद्धस्यासार्वत्रिकत्वेन आकडाराधिकारे पाठवैयर्थ्येन च 'सन्वल्लघुनि-' इति सूत्रोक्तलच्यानुरोधिकैयटोक्तव्याख्यानद्वयेन च तत्रापि 'दीर्घो लघोः' एतत्प्रवृत्तेरनिष्टत्वेन दोषाभावाद् न्यासोऽदुष्ट एवेति । भेत्तेत्यादौ क्तोः कित्वेन भूतपूर्वलघूपधत्वमाश्रित्यापि गुणेऽदोषात् तोतोर्तीत्यादौ वकारसत्त्वे गुणाप्रवृत्तेरपि भूतपूर्वलघूपधस्यैवेति नियमाभावेन वकारलोपे लघूपधत्वेन तत्प्रवृत्तेः । इन्दतीत्यादावुपदेश एवेकारस्येत्वनुम्प्रवृत्त्यौपदेशिकलघूपधत्वस्याप्यभावेन गुणाप्रवृत्तेरेवादोषात् । यत्तु अततक्षदित्यादौ समानकालप्रवृत्तया गुरुसंज्ञया लघुसंज्ञाया बाधेऽपि भेत्तेत्यादौ पूर्वप्राप्ताया अन्तरङ्गाया लघुसंज्ञाया बाधे मानाभाव इति तन्न, परसंयोगनिमित्तिकाया गुरुसंज्ञाया 'येननाप्राप्ति' न्यायेन लघुसंज्ञापवादत्वात् । न चासेत्यादावकरादौ 'संयोगे गुरुः' इति चरितार्थमिति वाच्यम्, शास्त्रीयसंज्ञामात्रस्यानन्यसाध्यतत्फलसाधकत्वेनैतादृशेषु 'दीर्घं च' इति सूत्रेणैव सिद्धतया संयोगे गुरुरित्यस्यैतद्विषयकत्वाभावादित्यलम् ।

( ३ ) 'मुखनासिकावचनोऽनुनासिकः' । अत्र 'मुखवचनोऽनुनासिकः' इत्येवास्त्विति केचित् । यतेत्यादौ 'अनुदात्तोपदेश' इत्यादिना ककारादिलोपस्तु न, अनुदात्तोपदेशेत्यत्रानुनासिकस्थाने जम्, इत्येव पाठ्यम्, अनुदात्तोपदेशादीनां जमो लोप इत्यर्थेन ककारादिलोपाप्राप्तेरनुनासिकग्रहणं चिन्त्यप्रयोजनमिति चेत्, पच्-धातोः क्विपि पगित्यत्र 'अनुनासिकस्य क्वि'-इति दीर्घापत्तेः । न च तत्रापि 'जमः क्विझलोः' इति न्यासेनैवेष्टसिद्धिः, जमन्तस्योपधाया दीर्घ इत्यर्थादिति वाच्यम् । अग्निचिद्रेत्यत्र 'यरोऽनुनासिके'- इति नत्वापत्तेः । अत्रापि 'यरो जमि जम् वा' इति न्यासेन वारणे तु एतद् इत्यस्यासिद्धिर्दुर्वारैवेति यथान्यासमेव रमणीयम् । न चैवमपि 'यरोऽनुनासिके'

इत्यनेन यरः पदान्तस्यानुनासिकशब्दे परेऽनुनासिकः स्यादित्यर्थः प्रसज्ज्येत 'स्वं रूपम्' इति परिभाषया शब्दसंज्ञाभिन्ने स्वरूपग्रहणस्योक्तत्वादस्याः शब्दसंज्ञात्वादिति वाच्यम्। स्वं रूपमित्यस्य भाष्ये प्रत्याख्यानाद्' दोषतादवस्थ्यमित्यपि न, 'उपान्मन्त्रकरणे' 'पुच्छभाण्डचीवराण्णिङ्, ङमुण्नित्यम्' इत्यादिनिर्देशेन सूत्रसत्त्वेऽप्यनुनासिकइत्यत्र स्वरूपाग्रहणात्। ननूक्तनिर्देशाश्रयणे प्रतिपत्तिगौरवम्; अत एव निष्प्रयोजनमित्यनुक्त्वाऽनुनासिकग्रहणं मन्दप्रयोजनमित्युक्तं शेखरे, इति दिक्।

(४) 'तुल्यास्यप्रयत्नं सवर्णम्, अत्र तुल्यास्यं सवर्णम्' इत्येवास्तु। ताल्वादिस्थानं यस्य येन तुल्यं तन्मिथः सवर्णमित्यर्थः; वाक्श्च्योततीत्यत्र तु 'झरो झरि सवर्णे' इत्यत्र 'झयो झयि'-इति न्यासं कृत्वा यथासंख्यसूत्रप्रवृत्त्या लोपं व्यावर्त्य निंसे इत्यादौ 'झलो झलि' इति लोपेन निर्वाह इति चेन्न णकाररेफयोः सावर्ण्यापत्तौ कुण्डं रथेनेत्यत्र रेफसावर्ण्येन णकारः परसवर्णः स्यात्। न च 'अर्णम्' इति न्यासेन रेफणकारभिन्नं सवर्णमित्यर्थान्न दोष इति वाच्यम्। हकारकवर्गयोः शकारचवर्गयोः सावर्ण्यापत्तौ उदितः सवर्णग्राहकत्वेन 'चोः कुः' इति सूत्रेण शकारस्य स्थाने हकारोऽपि स्यात्। न च 'कुहोश्चुः' इत्यत्र हकारोपादानेन कवर्गोपादानेन च पञ्चवर्गभिन्नग्रहणेन वर्गस्य ग्रहणं न, वर्गग्रहणेन तद्भिन्नग्रहणं नेति ज्ञापनेनादोषात्। अत एव ज्ञापकात् तत्करोतीत्यादौ 'झयो होऽन्यतरस्याम्' इत्यस्यापि नप्रवृत्तिरिति चेन्न, यकारशकारयोस्तालव्यत्वात् सावर्ण्यापत्तौ यकारस्याण्त्वात् तद्ग्रहणेन शकारग्रहणे 'लोपो व्योर्वलि' इति वलपरतः शकारस्यापि लोपः स्यात्, तथा हरिं शकार इत्यत्र शकारे परेऽनुस्वारस्य परसवर्णानुनासिको यकारः स्यात्, उभयोरपि वर्गभिन्नत्वात्। वस्तुतस्तु यकाररेफलकारैः शषसानां ग्रहणे सिद्धे हलूघटितसूत्रेष्टसिद्धौ हयूप्रत्याहाराऽकरणेन, तथा सुप्रत्याहारेण यरूघटितसूत्रेषु तदकरणेन यकाररेफलकारग्रहणेन शषसानां ग्रहणं नेति ज्ञापनात् प्रयत्नग्रहणं व्यर्थमेव।

(५) 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति सूत्रभाष्ये प्रातिपदिकस्य किं तिबन्ते मा भूत्, काण्डे कुडे इत्युक्त्या 'तिप्तम्' इति सूत्रस्थतिपमारभ्य सुपः पकारेण प्रत्याहारस्य लाभात् तद्घटितः, सुप्तिङन्तं

पदम्' इत्यत्र 'तिबन्तं पदम्' इति न्यासोऽस्तु पदमात्रालाघवेनाभिमतफलेच्छ्या च सुवचमिति प्रतीमः । अत्र केचित् तिप्प्रत्याहारघटकत्वेन यासुडादेरपि प्रवेशात् पदसंज्ञायां तदन्तस्यापि प्रवेशेन भूयासुर्भूयासमित्यादौ सकारस्य पदान्तत्वेन 'ससजुषो रुः' इति रुत्वापत्तिरित्याहुस्तदसत् तिब्घटकस्य सर्वस्य धातुप्रातिपदिकान्यतरविहितत्वेन तत्र प्रातिपदिकविहितस्य स्वादेः प्रत्ययत्वेन तत्साहचर्याद्धातुविहितस्यापि प्रत्ययस्यैव ग्रहणेनादोषात्, यदागमपरिभाषया विशिष्टे प्रत्ययत्वेऽपि केवले यासुडादौ तदभावात, किञ्च तद्घटकसुपोऽर्थवत्त्वेन तत्साहचर्यादितरस्यापि तथाविधस्य ग्रहणेनाप्यदोषात्, 'आगमसमभिव्याहारे' इति न्यायेन विशिष्टे तत्त्वेऽपि केवले तदभावस्येष्टत्वात् । प्रत्ययाप्रत्ययेति परिभाषया प्रत्ययस्यैव ग्रहणाच्च, तिबादिविधायकसूत्रानन्तरमेव सुबादिविधायकस्य पठनीयतया मध्ये यासुडादेः प्रवेशाभावाच्च ; यत्तु पचतु भवतु सततं येष्वभिधीयते ते पचतुभवतवो व्यापारास्तत आचारक्विबन्ताल्लटि अपि, गुणे 'एङः पदान्तादति' इति पूर्वरूपे पचतुभवतोऽतीति भवति 'स्वादिष्वसर्वनामस्थाने 'यचि भम्' इत्यत्र योगविभागपरया मध्ये चेत् सुबन्तं तदपि भं भवतीति भाष्योक्त्या भवत्वित्यादेः सुबन्तत्वाभावेन पदत्वादिष्टं सिद्ध्यति, इदानीं तत्स्थाने मध्ये चेत् तिबन्तमित्येवोक्तिः स्यात् तथा च तस्य तिबन्तत्वेन भत्वात् पूर्वरूपाभावेनावादेशे पचतुभवतवोत्यनिष्टं स्यादित्युक्तं तदपि तुच्छम् । तादृशभाष्ये भसंज्ञानिमित्तभूतयादिसर्वनामस्थानभिन्नाजादिस्वादिप्रत्यये परे एव तादृशोक्त्या शबादेस्तत्त्वाभावेनादोषात् । किञ्चोक्तसूत्रस्य तिप्प्रत्याहारघटितत्वेऽपि सुप्प्रत्याहारस्य सुबन्तव्यवहारादेरप्यन्यत्र शास्त्रे सत्त्वेनेदानीमपि मध्ये चेत् सुबन्तमित्याद्युक्तेरक्षततया विरोधाभावाच्चेत्यलम् ।

( ६ ) 'इको गुणवृद्धी, इदं मास्तु 'अचश्च' इत्यत्रैव गुणवृद्धी इत्यस्यापि पाठेन 'ऊकालोऽज्-' इत्यतो ह्रस्वादेरनुवृत्त्या ह्रस्वदीर्घप्लुतशब्दैर्गुणवृद्धिशब्दैश्च यत्र ह्रस्वादेर्गुणवृद्ध्योश्च, विधानं तत्राच इति षष्ठ्यन्तं पदमुपतिष्ठत इति यथान्यासयुक्त्यैवार्थेनाच इति पदोपस्थित्यैव सामञ्जस्यात् । अकारादिषु प्राप्तगुणवृद्धिवारणं तु प्रकृतसूत्रस्थभाष्योक्तरीत्यैवावसेयम् । तद्यथा अच इत्यस्योपस्थित्योश्चितोश्चितुमित्यादौ व्य-

ञ्जनस्य प्राप्तिरेव न, सामग इत्यादावातो लोपार्थं कृतस्य 'गापोष्टक्' इति टकि कित्त्वस्य गुणे पररूपेणेष्टसिद्ध्या वैयर्थ्येन तन्मूलकादाकारस्य गुणो न भवतीति ज्ञापनाद् यातावातित्यादावाकारस्य न ग्लायतीत्यादावेकारविशिष्टोपदेशस्य गुणादिना वैयर्थ्यात् तत्सामर्थ्यात् सन्ध्यक्षरस्य न, इकारादिषु चतुर्ष्वपीष्ट एवेति । एतदेवेग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थमित्यादिना भाष्येऽपि दर्शितमिति । पेचिथेत्यादावकारस्याकारगुणेऽपि दोषाभावेन न्यासः सुवच इति प्रतिभाति । यत्तु पेचिथेत्यादावकारस्याकारगुणेन त्वत्यभावेऽपि 'न शसददवादिगुणानाम्' इत्यनेनाकारस्य गुणशब्देन भावितत्वादेत्वाभ्यासलोपौ न स्यातामिति न्यासे दोषमुद्भावयन्ति तन्न ' अत एकहल्-' इत्यस्य किति लिटि प्रवृत्त्याऽकिदर्थं 'थलि च सेटि' इत्यस्य सत्त्वेन साम्प्रतमनादेशादेरिति निषेधप्रवृत्त्या सूत्रवैयर्थ्येन यत्र गुणादेशेन रूपान्तरप्राप्तिस्तादृशस्यैव गुणशब्देनभावितस्य ग्रहणेनादोषात् ' थलि च सेटि ' इत्यस्य निषेधविषयेऽकिति च विधानार्थमारम्भाच्च । यदप्युक्तं सिद्धान्ते, इग्ग्रहणमुत्तरार्थमिति' भाष्योक्त्या क्ङिति च' इत्यनेनेग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, इदानीमचूपदोपस्थित्याऽज्लक्षणयोरेव निषेधेन 'अचो ञ्णिति' इत्यादिविहितानामपि निषेधापत्त्या न्यासो न सम्यगिति तदपि न, राद्धान्तिकेष्टस्थलस्येदानीमपीष्टत्वेन 'अचोञ्णिति' इति विषये क्ङितामभावेन लैगवायन इत्यादौ निषेधेन 'क्ङिति च' इति सूत्रमेव व्यर्थं तस्मात् तद्धितक्ङिति निषेधाभावज्ञापनेन गित्साहचर्येण धात्वधिकारविहितकिङ्ङितोर्ग्रहणाच्च दोषाभावात् । अन्ये तु शब्दव्यापाराश्रयणानुरोधेनापि 'इको गुणवृद्धी, इत्यत्रत्यगुणवृद्धिग्रहणं न कार्यम् । 'इकस्तौ' इत्येतावतैवेष्टसिद्धेः । अत्र केचिद् गुणवृद्धिग्रहणे सति अनुवृत्त्यैव सिद्धे पुनस्तद्ग्रहणं योजनया शब्दपरत्वेन गुणवृद्धिशब्दाभ्यामित्याद्यर्थलाभाय 'इकस्तौ' इति न्यासे तु यत्र तौ गुणवृद्धिविधेयौ तत्रेक इति पदमुपतिष्ठत इत्यर्थेन 'त्यदादीनामः' पथिमथ्यृभुक्षामात् 'दिव औत्' इत्यादावपि प्रवृत्त्याऽनिष्टापत्त्या न्यासोऽनिष्ट इति तन्न 'न यासयोः' इति निर्देशेन 'इतोत्सर्वनामस्थाने' इति सूत्रवैयर्थ्येन च गुणवृद्ध्योरनुवृत्त्यैव सिद्धे तत्परामर्शार्थं कृतस्य तावित्यस्य वैयर्थ्येन च 'इतोत्सर्वनामस्थाने' अत्रत्येद्ग्रहणज्ञापकादप्युक्तार्थलाभसम्भवेन दोषाभावात् । वस्तुतस्तु तावित्यपि व्यर्थम्, 'इकः' इत्येव सूत्र्यताम् । सम्पू-

र्णंपूर्वसूत्रद्वयमनुवर्त्त्य वृद्धिरित्यादैचौ यत्र विधीयेते, गुण इत्यदेङौ यत्र विधीयेते तत्रैक इत्युपतिष्ठत इति व्याख्यानेनेष्टसिद्धेः । उक्तव्याख्याने लिङ्गं तु 'इतोत्सर्वनामस्थाने' अत्रत्येद्ग्रहणमेव । अन्यथा तत्रापीक्-परिभाषोपस्थितौ यथाश्रुतरीत्या 'येननाव्यवधान'-न्यायेन नकारादि-व्यावृत्तौ सत्यां किं तेन, ज्ञापिते चारितार्थ्यं तु, अकारस्याच्छब्देन विधानाद् गुणशब्देन विधानाभावेन स्पष्टमेव । तदेतदिग्ग्रहणं किम-र्थमिति भाष्ये इग्ग्रहणमात्मन्व्यत्त्वरमित्यादिवार्त्तिकेनापि सूचितम् । गुणवृद्धिशब्दाभ्यामित्याद्यर्थाभावे गुणवृद्धिग्रहणस्यापि वैयर्थ्येन सूत्रं किमर्थमित्येव वदेदिति संक्षेपः ।

(७) 'अलोऽन्त्यस्य' 'ङिच्च' 'अनेकाल्शित्सर्वस्य' इति सूत्रत्रयस्था-ने'ङिदलोऽन्त्यस्याशिदनेकाल्' इत्येवास्तु, अनेकालित्यत्र सर्वस्य ङिच्चे-ति चकारस्याकरणेन च लाघवम् । अत्र वाक्यद्वयम्, ङिदलोऽन्त्यस्य ततोऽशिदनेकालिति, तत्र प्रथमस्य ङिदादेशोऽन्त्यस्यालो भवति । द्विती-यस्य शिद्भिन्नोऽनेकाल्भिन्नश्चादेशोऽन्त्यस्यालो भवतीत्यर्थः । ततः 'आदेः परस्य' परस्य विहितो यः शिद्भिन्नोऽनेकाल्भिन्नो वाऽऽदेशः पर-स्यादेरलो भवतीत्यर्थेन सर्वसामञ्जस्यात् । अवशिष्टस्य शिदादेशस्याने-कालादेशस्य च बाधकाभावेनान्त्यादिस्थाने विधायकाभावेन च सर्वादेशत्वं सिद्ध्यतीति सर्वमवदातम् । एतन्न्यासपक्षेऽपि 'तस्मादित्यु-त्तरस्य' इत्यत्र कृते 'तस्मादित्युत्तरस्यादेः' इति न्यासे बहुसूत्रव्यवधा-नेनाशिदनेकालित्यस्य सम्बन्धाभावेन सर्वविषयकत्वादस्याष्टावित्यादौ सर्वादेशस्य बाधो मूलोक्तवदेव । 'आदेः परस्य' इत्यत्रैव तथा न्यासे-ऽशिदनेकालित्यस्यात्र सम्बन्धेन शिदनेकाल्विषयेऽस्याप्रवृत्त्याऽष्टावि-त्यादिसिद्धावपि अवयवषष्ठीसाधारणविषयतस्मादित्युत्तरस्यैव स्थान-षष्ठीमात्रविषयादेः परस्येत्यस्यागमविषयेऽपि प्रवृत्त्या देवासो ब्राह्म-णास इत्यादावाद्यन्तौ टकिताविन्यनेनासोऽकारात् परादाज्जसेरसुगि-त्यनेनाऽसुकी विधानात् संयोगान्तसकारलोपे पररूपे दीर्घे विसर्गे च देवा ब्राह्मणा इत्यनिष्टापत्तेः । तत्रासुटि कृते न दोष इत्यपि न, 'अश्व-क्षीरवृषलवणानामात्मप्रीतौ क्यचि' इत्यत्रापि, असुटः सम्बन्धेन टित्वा-दश्वादीनां प्राग्विधानेन रूपवैषम्यापत्तेः । अत्र क्यच इत्युक्तौ टित्वात् क्यचः प्रागसुटः सत्त्वेऽपि यदागमन्यायेनासुड्विशिष्टे क्यच्त्वात् 'क्यचि च' इतीत्वापत्तेः । 'अश्वक्षीर-' इत्यत्र क्यचसुगित्युक्तौ तु लाघव-

स्यैवाभावाद् इत्यादि यथान्यासवदनुसन्धेयमिति। 'अनेकाल्शित्सर्वस्य' अत्र शेखरे 'नानेकाल्शित्' इति न सूचितम्। तथा सत्यनन्तरस्येति न्यायेनेदम् 'आदेः परस्य' इत्यस्यैव बाधकं स्याद्, न त्वलोन्त्यस्येत्यस्य, तथा सति 'अलोऽन्त्यस्य' इत्यस्यानेकालादिविषयेऽपि प्रवृत्त्या ङिच्-योऽनेकाल् सोऽन्त्यस्य भविष्यत्येवेति 'ङिच्च' इति व्यर्थं सदनन्तरस्येति न्यायोऽत्र न प्रवर्तते इति ज्ञापयिष्यति तथा सत्युक्तयोगस्य 'अलोऽन्त्य-स्यादेः परस्य' चेत्युभयोर्बाधकत्वेन न दोषलेशोऽपीति प्रतीयत इति।

(८) 'इको यणचि' नन्वत्र 'ह्रस्वस्य पिति कृति तुक्' इत्यतो ह्रस्वस्य 'दीर्घात्' इत्यतो दीर्घपदस्य चानुवृत्त्या षष्ठ्यन्तत्वेन विपरि-णम्य ह्रस्वदीर्घयोर्यणादेशोऽचीत्यर्थेन व्यञ्जनस्याप्राप्त्या दण्डाढकमि-त्यादौ तु न यणापत्तिः'अकः सवर्णे दीर्घः, इत्यस्यैतदपवादत्वेन सवर्णा-चूपरकामतिरिक्तत्वेन तेनात्र संकोचात्। एवमुपेन्द्रः कृष्णैकत्वमि-त्यादौ 'आद् गुणः' 'वृद्धिरेचि' इति सूत्राभ्यां बाधान्न भविष्यति। अया-दिविषये सोऽपि बाधको भविष्यति, प्लुतस्य तु प्रकृतिभाव एव स्या-दित्यत्रेग्ग्रहणं हेयमिति केचित् तन्न, एहि करभोरु इति, सुतनु इति, चिनुहि अत्रेत्यादिषु बहूषूदाहरणेषु 'अप्लुतवदुपस्थिते' 'ईचाक्रवर्म-णस्य' इत्यादिना 'प्लुतप्रगृह्या'-इति प्राप्तप्रकृतिभावनिषेधेऽनेनेष्टो-ऽपि यण् प्लुतस्य न स्यादत्र ह्रस्वत्वादेरसत्त्वात्। ह्रस्वदीर्घपदानुवृत्तौ तु व्यञ्जनस्यापि स्यात्। अयं भावः पूर्वोक्तसूत्रद्वयस्याप्लुतकार्यं यणादिकं करोतीति नार्थस्तथा सति अग्नी इति, विष्णू इतीत्यादौ प्रगृ-ह्यसंज्ञानिमित्तकप्रकृतिभावं प्रबाध्य परत्वात् तत्तत्सूत्रेण यणादिकार्य-मेव स्यात्। ततश्च वत्करणप्रयोजनं यणादिकमेव स्यादतः प्लुतकार्यं प्रकृतिभावं न करोतीत्ययमेवार्थो युक्तस्तस्मादुक्तप्लुतस्य यण्व्यावृत्तये इग्ग्रहणस्यावश्यकत्वात्*। यातेर्यङन्तात् क्विपि च यातिरित्यत्राकारस्य स्थानिवत्त्वेनाच्परत्वादाकारस्य यण्व्यावृत्तेरपि तत्फलत्वात्। दीर्घ-गुणयोस्तु न विषयः पूर्वसम्बन्धिन्येव विधौ स्थानिवदित्युक्तेः। 'अकः सवर्णे' इत्यत्र त्वग्ग्रहणमावश्यकमेव एचः सवर्णे एचि दीर्घा-पत्तेः। येननाप्राप्तिन्यायेनास्य यणपवादत्वाद् यण् तु न अयाद्यादेशेन बाधात्। एतेनात्रापि ह्रस्वदीर्घयोरनुवृत्त्यैव सिद्धेऽत्राप्यग्ग्रहणं मास्त्विति यदुक्तं तदपि निरस्तम्। अन्ये तु इग्ग्रहणस्योक्तयुक्त्या वैयर्थ्यमाशङ्क्यैको यणेव क्वचिद् यथा स्याद् यदन्यत् प्राप्नोति तद्-

मा भूत् किमन्यत् प्राप्नोति 'इकोऽसवर्णे'-इति शाकलम् । एवं च यदुक्तं 'न समासे, सिति च' तदनेनोपपन्नं, भवतीत्याहुरित्यन्यत् । यदपि केचित् इको यणचीत्यत्राको यणचि इत्येवास्तु मास्त्वकः सवर्ण इत्यत्राग्ग्रहणमितोऽनुवृत्त्यैव तल्लाभात् । सवर्णेचि दीर्घेण क्वचिद्गुणवृद्धिभ्यामन्यत्रायादिना क्वचित् प्रकृतिभावेनोक्तयुक्त्यैव बाधेनेष्टसिद्धिरिति । तदपि न, यातिरीत्युक्तोदाहरणे उक्तदोषस्यैव सत्त्वेनासिद्धः । यदप्यत्रापरे अभ्यासकार्ये तदुत्तरखण्डाजादेशो न स्थानिवदिति युक्त्या दोषाभावेन न्यासः सुवच इति वदन्ति तस्या अप्युक्तधातूत्तराकारस्य स्थानिवत्त्वाभावेऽपि यङ्घटकाकारलोपस्योत्तरखण्डाजादेशत्वाभावेन तत्राभ्यासकार्यप्रतिबन्धकीभूतेति निवेशेनात्र साधकस्यैव सत्त्वेन च स्थानिवद्भावनिषेधस्याप्रवृत्त्याऽतिप्रसङ्गस्य तादवस्थ्येनैव हेयत्वादित्यलं बहुना ।

(८) 'तस्य लोपः' अत्र लोप इत्येवास्तु उपदेशेऽजनुनासिक इदित्यस्मादिदित्यनुवर्त्य विभक्तिविपरिणामेनेत्संज्ञकस्य लोपो भवतीत्यर्थादेवेष्टसिद्धेः । न चालोऽन्त्यपरिभाषया ञिटुनामन्त्यलोपापत्तिः । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे इत्यनेनानर्थकेषु तेषु तस्या अप्रवृत्तेरिति वाच्यम् । नानर्थक इत्यस्य भाष्ये प्रत्याख्यानात् अन्त्यलोपापत्तेर्दुर्वारत्वात् । तस्य ग्रहणे तु तस्य सर्वलोपार्थकत्वेनालोऽन्त्यपरिभाषाया बाधात् ञिटुडूनामन्त्यलोपो नेति शेखरेऽप्येवमेवोक्तिः । न च ञिटुडूनामन्त्यलोपो न भविष्यति । आदिर्ञिटुडव इति सूत्रारम्भात् विशिष्टस्येत्संज्ञायामप्यन्त्यमात्रलोपे उपदेशेऽजित्यनेन तत्संज्ञया लोपेनैव तत्सिद्धेरिति वाच्यम् । अथुज्विधायके लोपानपेक्षेत्संज्ञाया एवाश्रयणेनाथुच्प्रत्ययसम्पादनेन तस्याः कृतार्थत्वात् । तस्यान्यथा निर्वाहाभावात् तस्य-ग्रहणस्य सर्वलोपार्थमावश्यकत्वात् । एवमपि 'आदिर्ञिटुडूनामिति न्यासेन व्यञ्जनस्य 'उपदेशेऽजनुनासिक इत्-' इत्यनेनाचश्चेत्त्वं लोपे च ट्वितोऽथुजित्यादौ मिलितस्योभयस्य ग्रहणेनैवाथुच्सिद्धौ किं सर्वलोपार्थं तस्य-ग्रहणेनेति चेच्छृणु-'उदितो वा'-इति उदित्वात् ततः परस्य क्त्वाप्रत्ययस्येड्विकल्पापत्तेः । तत्र कर्मधारयसमासे इदभिन्नादुकारात् परस्य क्त्वा इत्यर्थेडिति तु वक्तुमशक्यम् । आदीत्संज्ञकोकारावयवस्य उबुन्दिर्, उतृदिर् इत्यादीनामसंग्रहापत्तेः । वस्तुतस्तु लुप्यत इति लोपः कर्मघ-

अन्त्यलोपशब्दस्य सत्त्वेनेदित्यनुवर्त्येत्संज्ञको लुप्यत इत्यर्थात् षष्ठीनिर्दिष्टत्वाभावेन नान्त्यलोपापादकाशस्तस्य-ग्रहणस्य सर्वलोपार्थं नावश्यकतेति ध्येयम्। केचित् तु शेखरग्रन्थसंरक्षणायोपदेशेजित्यत्र संज्ञापरस्येत्पदस्य तस्य लोप इत्यत्र संज्ञिपरत्वे दृढतरमानाभावेन कर्मसाधनलोपपदमादायोक्तव्याख्यानं न सम्यक्तरमित्याहुः। तन्न शेखरकृतैव पूर्वत्र संज्ञापरस्यानुवृत्त्या संज्ञिपरत्वेन तस्य-ग्रहणस्य ज्ञापकतोक्ता तस्या असिद्धेः। यत् तु 'अदर्शनं लोपः' इत्यत्र लोप इति पदं पृथक्कृत्य 'अदर्शनम्' इति विन्यस्योपदेशेऽजित्यत्रेत्पदमनुवर्त्य प्रशक्तस्यादर्शनमित्संज्ञं भवतीत्यर्थः। सर्वत्र लोपग्रहणेषु 'अतो लोपः' इत्यादिषु इत्करणेनेद्वत्यदर्शनं भवतीत्यर्थेन सर्वसामञ्जस्ये 'तस्य लोपः' इति सूत्रमेव नादर्त्तव्यमिति तन्न, णेरनिटीत्यत्राप्यतो लोप इत्यत्र कृतस्येदित्यस्यानुवृत्त्या णेरिद्भवतीत्यर्थो विदित्त्वान्नुमः। 'ऋत इद्धातोः'-इत्यनेन स्तीर्यादित्यत्र ऋकारलोपस्य 'भृञामित्' इत्यनेन बिभर्तीत्यादावभ्यासलोपस्यैवं बहुषु स्थानेषूपप्लवापत्त्या हेय एवंविधो न्यास इति ध्येयम्।

(१०) 'वान्तो यि प्रत्यये' अत्र 'वान्तो य्यङ्गस्य' इत्येव सूत्रमस्त्विति केचित्। तेषामयमाशयः। अङ्गेन प्रत्ययाक्षेपात् तद्विशेषणत्वेन तदादिविधौ यादौ प्रत्यये परे ओदौतोरवावौ स्त इत्यर्थाद्गोयानमित्यादौ दोषाभावेन गव्यमित्यादाविष्टसिद्ध्या च न्यासः सुवच इति तन्न वासुदेवार्थकादकारात्-'अत इञ्' इति इञ्प्रत्यये 'यस्येति च'-इति लोपे इस्तस्यारिशब्देन समासे यणि च एरिर्यरिर्भूयो गोशब्देन समासे गोर्यरित्यत्र स्थानिवद्भावेनेकारस्थानिकयकारे प्रत्ययत्वेन सिद्धान्ते तस्मिन् परे वान्तादेशे गव्यरिरिति साम्प्रतमङ्गग्रहणसत्त्वेन प्रत्यासत्त्या यादिप्रत्ययनिरूपिताङ्गस्यैव ग्रहणेन गो इत्यस्य तन्निरूपिताङ्गत्वाभावाद्वान्तादेशविरहेणानिष्टत्वात्। ननु सिद्धान्तेऽपि वान्तादेशे कर्त्तव्ये बहिरङ्गपरिभाषया स्थितपरनिमित्तकत्वेन बहिरङ्गयणादेशस्यासिद्धतया यादिप्रत्ययपरत्वस्याभावाद्वान्तादेशो न जायत एवेति चेत् तादृशान्तरङ्गत्वस्य भाष्यादावनुल्लेखादुल्लेखेऽपि 'नाजानन्तर्ये' इति निषेधादज्निष्ठान्यानन्तर्यनिमित्तके कार्ये कर्त्तव्ये कृते चेत्यस्य तस्या अर्थत्वात्। किञ्च अ-शब्दाचारक्विबन्तात्-'अचो यत्-' इति यति अकारलोपे य इति तस्य गोशब्देन

समासे वान्तादेशो भवति। अल्लोपस्य स्थानिवद्भावस्तु न, पूर्वत्वेन दृष्टत्वाभावात्, दृष्टत्वेऽपि न पदान्तेति निषेधात् । इदानीं यत्प्रत्ययनिरूपिताङ्गत्वस्य गोशब्देऽभावान्न स्यात् । एकाज्भ्य आचारक्विपोऽनभिधानं तु लिव्येव काम्प्रत्ययादामिति भाष्यप्रामाण्यात् ज्ञापकस्य विशेषविषयत्वात् । तथा अ-शब्दात् तत्र साधुरिति तद्धिते यति 'यस्य'-इत्यकारलोपे गोशब्देन समासेऽपि वान्तादेशो न स्यादुक्तयुक्तेः । नात्र बहिरङ्गासिद्धत्वप्राप्तिर्यकारनिमित्तकयोरेवाल्लोपवान्तादेशयोरुभयोर्विधानात् । प्रत्युत घटकनिमित्तकत्वरूपान्तरङ्गत्वस्य लोप एव सत्त्वात् । आक्षिप्तस्य शाब्दबोधे भानाभावेनोक्तसूत्रार्थस्य लाभाभावाच्चाधिकतरलाघवाभावेन च न्यासोत्थानमेव न सुस्थमित्यन्ये । परे त्वत्र 'यि प्रत्यये' इत्येवास्तु, 'एचोऽयवायाव, इत्यस्य सम्बन्धादेचो यादौ प्रत्ययेऽयादयः स्युरित्यर्थाद्गव्यं नाव्यमित्यादि सिद्धेः । एवं च स्थान्यादेशज्ञानाय पूर्वसूत्रवाक्यार्थपर्यालोचनक्लेशः 'ओदौतो-रिति वक्तव्यम्, इति वार्त्तिकं च नाश्रयणीयमित्यपरमनुकूलम् । न चैवं चेयंजेयमित्यादावतिप्रसङ्गः । 'क्षय्यजय्यौ शक्यार्थ इत्यत्र क्षय्यजय्यावित्येको योगः । शक्यार्थ इत्यपरः । तत्र प्रथमस्य ज्ञापकस्य सजातीयापेक्षत्वेन कण्ठतालव्यस्य चेद्भवति क्षिज्योरेवेति नियमपरतया व्याख्यानेनादोषात् । नन्वेवमपि क्षिज्योरेवेति नियमेन तुल्यजातीयस्यैकारस्य यान्तादेशव्यावृत्तावपि इतरैकारस्य व्यावृत्य लाभेन रायमिच्छतीति क्यचि तस्मिन् यान्तादेशः प्राप्नोतीति तदपि न रायिच्छान्दस इति भगवदुक्तेश्छन्दसस्य दृष्टानुविधायित्वात्। रैशब्दस्य क्यजन्तस्य रूपं नास्तीति कैयटोक्तेश्च । यादौ प्रत्यये परतश्छन्दस्यस्य प्रयोग एव न भवतीत्युक्तभाष्याक्षरार्थ इति व्याख्यातव्याख्यानाच्च तादृशप्रयोगस्यैवानभिधानात् । द्वितीयस्य क्षिज्योः शक्यार्थ एवेति नियमलभ्योऽर्थः । तथा च शक्यार्थादन्यत्र चेयमित्यादौ न दोषः । एकयोग एवोक्तनियमेन सिद्धे योगविभागेन क्वचिदन्यत्रापीति बोधनाद्व्यूतिरित्यस्य सिद्धौ तदर्थं वार्त्तिकमपि नादरणीयमित्याहुः ।

( ११ ) 'धातोस्तन्निमित्तस्यैव' अत्र केचित् 'वान्तो यि प्रत्यय' इत्यनेन सर्वत्र यादिप्रत्यय एचो वान्तादेशः प्रसक्तस्तत्र धातोरेचश्चेद्वान्तादेशो यादिप्रत्ययनिमित्तस्यैवेति नियमेन धातुसम्बन्धियादि प्रत्ययानिमित्तस्य नेत्यतत्सूत्रफलम् । तेनौयते औयत इत्यादौ धातूपस-

र्गनिमित्तस्याटश्चेति वृद्धिनिमित्तस्य च नेति। तत्रापि प्रथमोदाहरणेऽन्तरङ्गपरिभाषयैव पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपेणोपेद इत्युदाहरणविषयोक्तेनान्तरङ्गवान्तादेशेन बहिरङ्गगुणस्याऽसिद्धतया न दोषः। द्वितीयेऽपि यकि पर एचो वान्तादेशो नेत्यर्थकेन 'न यकि' इति न्यासेन सिद्धे मास्तु 'धातोस्तन्निमित्तस्यैव'-इति सूत्रमित्याहुः। न च गोशब्दादाचारक्विबन्तात् कर्तृक्विपि गोषु साधुरिति विग्रहे 'तत्र साधुः'-इति यति गोयमित्यत्रापि वान्तादेशप्रसङ्गः, यकपरत्वाभावेन न यकीति निषेधाप्रवृत्तेः। सूत्रमते तु यादिप्रत्ययनिमित्तकत्वाभावान्न भवतीति वाच्यम्। नैव सन्ध्यक्षरमन्त्यमस्तीति 'इको गुणवृद्धी' 'वदव्रज'-इति सूत्रस्थभाष्यप्रामाण्यात् 'ओतः श्यनि' 'आदेच उपदेशेऽशिति'-इति भाष्यप्रामाण्याच्चैजन्तेभ्य आचारक्विपोऽनभिधानमेव। अत एव कौमुद्युक्तानां 'स्मृतो से' इत्यादीनामनभिधानत्वं शेखरेऽप्युक्तम्, एवं च गोयमित्यादीनामसाधुत्वेन न्यासः सुवच इति चेत् भूधातोः 'अन्येभ्योऽपि दृश्यन्ते, इति विचि कीलालप आगत इति भाष्यप्रामाण्येन लोकेऽपि क्वचिद् विचो लाभेन विचि तन्निमित्तकगुणे भो इति रूपम्। ततः साध्वर्थे यति वान्तादेशो न भवति उक्तन्यासे स्यात् एवं जनानवतीति जनौ तस्मात् साध्वर्थे यति दोषः स्पष्ट एव धातोस्तन्निमित्त इत्यत्र धातोरित्यवयवषष्ठी तर्हि उशश्मभुस्तमिच्छन् ऊयति आऊयति ओयति लङि औयतेत्यादौ यथान्यासे वान्तादेशो न एचो यादिप्रत्ययानिमित्तत्वात्, न यकीति न्यासे तु स्यादेतदर्थं यादौ क्विति यादौ तद्धिते न वान्तादेश इत्यर्थके 'अक्वित्तद्धितयोः' इति न्यासे बाभ्रव्यं गव्यतीत्यादि च न सिद्ध्येत् न तीति न्यासे औयत इत्यादि न त्क्विति इति न्यासे गव्यमित्यादि च न सिद्ध्येत्। तकारेत्संज्ञके यादौ नेति प्रथमस्य तकारेत्संज्ञके ककारेत्संज्ञके च यादौ नेति द्वितीयस्यार्थात्।

(१२) 'उरण्रपरः'। नन्वत्र उरणो रक् इत्येव सूत्रमस्तु। ऋकारस्थाने योऽण् तस्य प्रसङ्गावस्थायां रगागम इत्यर्थः। एवं चावयववाचिपरशब्दग्रहणाकरणं लाघवमिति चेन्न, कृ-तॄ-धातोर्यङ्लुकि चाकर्त्ति तातर्त्तीत्यादावभ्यासस्योरदत्वे तस्य रगागमेऽभ्यासस्य कित्वेनाकित इति पर्युदासात्-'दीर्घोऽकितः, इति दीर्घानापत्तेः। वस्तुतोऽकित इत्यस्याभ्याससमानाधिकरणविशेषणत्वेनाकित इत्यत्राभ्या-

सत्वावच्छिन्नोद्देश्यताककित एव ग्रहणाच्च यदागमपरिभाषयाऽका-रग्रहणेन रविशिष्टस्य ग्रहणेऽपि अभ्यासग्रहणेनाग्रहणादकित-इति पर्युदासाप्राप्तेर्दोषाभावात्। अत एव चाच्छायत इति भाष्यो-दाहरणसंगतिरन्यथाऽन्तरङ्गत्वात् 'छे च'-इति तुक्यभ्यासस्य कित्त्वेन दीर्घाभावे तदसङ्गतिः स्पष्टैव। एवं चोक्तयुक्त्या दोषाभावेन ऋः स्थाने योऽण् तस्य जायमानस्य रमागम इत्यर्थकेन उरण्रपर्-इति न्यासान्तरेण वा दोषाभावेन न्यासस्य सुवचत्वे विघ्नलेशोऽपि नेति विभावयन्तु विज्ञा इत्यलम्। अत्र केचित्-इदं सूत्रं न कार्यम्, 'अदेङ्गुणः' 'वृद्धिरादैच्'-इत्यत्र अरेङ्गुणो वृद्धिरारैजिति न्यासेनारारोर्गुणवृद्धिसंज्ञे गुणवृद्धिविधायकेन तयोर्विधानात् कृष्णर्द्धिः प्रार्च्छतीत्यादिसिद्धेः। विधानसामर्थ्याच्च रेफस्य नेत्संज्ञा एवं च प्रक्रियालाघवमपि, गुणवृद्धी अरारावेवेति भाष्यतोऽपि न विरोधः। अरारोरुच्चारणान्तर्येऽपि सौलभ्यमित्याहुस्तदसत्। यः स या सा इत्यादौ त्यदादीनामः, इति विहिताकारस्य गुणत्वेन पररूपस्य शालाद्याकारादेर्वृद्धिसंज्ञया 'वृद्धिर्यस्याचामादिः'-इत्यवृद्धत्वे छादेशासिद्धत्वस्यैव दोषात्। तपरत्वा-भावेन त्रिमात्रिकचतुर्मात्रिकयोरप्येङैचोर्गुणवृद्धिसंज्ञया गङ्गोदकं गङ्गौघ इत्यादौ त्रिमात्रिकचतुर्मात्रिकयोर्गुणवृद्ध्योरतिप्रसङ्गाच्च। यद्येतदर्थम् 'अरदेङ्गुणः' वृद्धिरारादैजिति विन्यस्य अर् अत् एङ् आर् आत् ऐचां गुणवृद्धिसंज्ञया नोक्तदोष इत्युच्यते 'ऋत इद्धातोः' इत्यादिना रेफविशिष्ट इरादिरेव विधातव्यः का क्षतिरिति चेन्न ऋत उदित्यत्रापि रेफविशिष्टोरित्यस्यैव पाठेन तत्रत्यतपरकर-णस्य भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति परिभाषाज्ञापकता न सिद्ध्येत्। तत्र ज्ञापकान्तरानुसरणेऽपि 'भृजामित्'-इत्यनेनेरित्य-स्यैव विधानेन तस्य चानेकाल्त्वेन सर्वादेशत्वापत्तेः। अत्र यद्यपि यथाश्रुते इदित्यस्य विधानेनान्त्यादेशेऽपि न क्षतिस्तथापि 'आपृज्ञ-पृधामीत्' इत्यनेन ईर्त्सतीत्यर्थं रेफविशिष्टविधानस्यावश्यकत्वेन तत्र विधानसामर्थ्याद्रेफस्य नेत्संज्ञा एवं च ईप्सतीत्यादौ रेफश्रवणापत्तेः सत्त्वेन यथाश्रुतमेव सम्यगिति।

(१३) 'एङः पदान्तादति' अत्रेङोऽति-इत्येवास्तु, 'अयमभिप्रायः अपदान्तेऽपि हरय इत्यादौ चेत्' ङसि ङसोश्च इति व्यर्थं तेन असति बाधके प्रमाणानाम्' इति न्यायेन 'भवतेरः' इति निर्देशेन चापदान्तस्य

चेदेङोऽतिपरे ङसि ङसोरेवातीति नियमेन हरय इत्यादावदोषात्, एवं च भवतीत्यादावपि नियमेनैव परिहारेऽपदान्तस्य किं भवतीति शेखरोक्तमप्यसङ्गतमिति । न चानुबन्धादौ चेद् ङसि ङसोरेवेति सजातीयनियमेन भवतीत्यादिव्यावृत्तावपि औपगवः, अचिनवम्, चय इत्यादिषूक्तदोषस्य तादवस्थ्यमित्यपि न, 'वर्ण कातान्तवे' अनुगत्रमायामे, इत्यादिनिर्देशेनैतन्नियमासम्भवादुक्तदोषाभावात् । यत् तु ङसि ङसोश्चेत्यस्य विभक्तिविषयत्वेन विभक्तावपदान्तस्य चेद् ङसि ङसोरत्येवेति विशेषनियमेन हरय इत्यादौ न दोषः । न च यदि जस्येव प्रयोजनं तर्हि ङसि ङसोश्चेत्यत्र न जसीत्येव ब्रूयात्, शसि सय इत्यादाविदानीं पूर्वरूपापत्तिः 'नियमे तु तेनैव वारणान्न दोष इत्यपि न' न हि पदान्तादेङो हरस्तीति भाष्यात् हे-प्रभृतीनामनभिधानात् अभिधानेऽपि न जश्शस्सु इत्येव ब्रूयात् तथाऽप्यचिनवमित्यादौ दोषसद्भाव इति वाच्यम् नामजश्शस्स्वित्युक्तावप्यदोषात् । अमित्यस्य तिङ्त्वेन विभक्तित्वात् । एशब्दादाचारक्विबन्ताल्लटि झेरन्तादेशेऽयन्ति भूधातोर्भवन्तीत्यादौ अन्तिघटकाकारस्य शपोऽकारेणैकादेशे विभक्तिपरत्वेन नियमे व्यावृत्तिसम्भवेऽपि न्यासे दोषस्य दुरुद्धरत्वात् । एशब्दस्य तादृशस्यानभिधानेऽपि भवन्तीत्यस्य सत्त्वात् तस्माद्विभक्तिविषयकनियमस्यैव न्यासापेक्षया युक्तत्वात् । केचित् तु ङसिङसोः सुप्त्वेन सुपि चेद् ङसिङसोरेवेति विशेषनियमे जसि व्यावृत्तिः फलिता तत्तात्पर्येण 'न जसि' इति न्यासः । शसि सय इत्यत्र तु न दोषस्तस्यानभिधानत्वस्योक्तत्वात् । तथा चापरनियमद्वये भवतीत्यत्र शपा व्यवधानाद्विभक्तिपरत्वाभावेन चय इत्यादावचा व्यवधाने विभक्तिसुप्परत्वाभावेन चाव्यावृत्त्या शेखरक्षता भवतीत्युक्तम् । तस्मादेतन्नियमद्वयमेव नागेशाभिमतमिति प्रतिभाति । वस्तुतस्तु 'सर्वत्र विभाषा गोः' 'अवङ् स्फोटायनस्य' इत्याद्यर्थमुत्तरार्थमावश्यकत्वेन स्पष्टार्थमिहैव कृतमिति सर्वः प्रपञ्चो निरर्थक इति दिक् ।

(१४) 'इकोऽसवर्णे शाकल्यस्य' । अत्र पदस्य शाकल्यस्य ह्रस्वश्च' इति विन्यस्येको यणचीत्यस्यानन्तरमस्य पाठेनेकोऽचीत्यस्यानुवृत्त्येगन्तस्य पदस्याचि परे ह्रस्वविशिष्टः प्रकृतिभाव इत्यर्थेन सामञ्जस्ये गुरुन्यासो विफल इति तत्त्वविदः । चिनुहि इतीत्यादौ प्लुतविषये 'अप्लुतवदुपस्थिते' इत्यादीनामेतद्बाधकत्वेन 'ई चाक्रवर्मणस्य' इत्यनेनाचानार्षे

तिशब्दावयवाजतिरिक्तत्वेनाजंशे सङ्कोचात् तत्रैतदप्रवृत्तेर्विकल्पेन रूपद्वयसिद्धौ बाधकाभावात्। यथान्यासे'अप्लुतवत् इत्यत्र इकोऽसवर्णे इत्यतोऽसवर्णपदानुवृत्त्येतिशब्दावयवासवर्णाचोत्यर्थेनान्यसवर्णाच्यस्य चारितार्थ्यात् सवर्णे ई चाक्रवर्मणस्य' इत्यस्य प्रवृत्तौ बाधकाभावात् न कथंचिद् दोषलेशोऽपि, न चेतादृशन्यासे सूत्रेऽसवर्णग्रहणाभावेन चक्रीहित्यत्रापि प्रकृतिभावः स्यादिति चेत्। इदानीमकः सवर्णे इत्यस्य तदपेक्षया परत्वेनाकारांशे चारितार्थ्येन वा सवर्णाचि चरितार्थस्यास्य परत्वात्तेन बाधादिति।

(१५) यत् तु 'न समासे' 'सितिच' इत्युभयत्र 'वृत्तौ न' इति न्यासेन वाप्यश्वः पार्श्वमित्यत्र च समासतद्धितवृत्त्योः सत्त्वेन प्रकृतिभाववारणेन वार्त्तिकद्वयाकरणरूपलाघवं दर्शयन्ति तन्न' दध्युपदंशं दध्युपपीडमित्यादौ 'सप्तम्यां चोपपीड'-इत्यादिना णमुल्युपपदसंज्ञायां 'तृतीयाप्रभृति-' इत्यादिना समासे इष्टनिषेधसिद्धावपि समासविकल्पपक्षेऽपि कृद्वृत्तेः सत्त्वादनेन निषेधेऽभिमतोऽपि यण् न स्यात्। यदपि पार्श्वमित्यत्र णस्विधायकेन 'सिति च' इत्यनेन ङ्वणं विधाय ङित्वाट्टिलोपे इगभावेन प्रकृतिभावाप्राप्त्या तन्निषेधकसिति चेति वार्त्तिकस्याकर्त्तव्यत्वेन लाघवं वदन्ति तदपि पर्शुशब्दादाचष्टाणयन्तात् क्विपि विचि वा टिलोपणिलोपयोः सतोस्ततो ङ्वणि णसि च रूपे विशेषस्योपलब्धेर्द्वैयमेव, टिलोपस्य स्थानिवत्त्वेऽपि पार्शं पार्श्वमिति रूपभेदवैषम्यस्य सत्त्वात्। न च रका सिद्धे आकारोच्चारणमन्यतो विधानार्थमिति 'गोधाया ढ्रक्' इतिसूत्रभाष्यात् प्रातिपदिकप्रकृतिकण्यन्तप्रकृतिकक्विबन्ताद्विजन्ताद्वा तद्धितस्यानभिधानमन्यथा गोधाशब्दादप्युक्तरीत्या क्विपि विचि वारक्यारकि च रूपे विशेषस्य सत्त्वात् तदुक्तमसङ्गतं स्यादिति वाच्यम्। ज्ञापकस्य सजातीयापेक्षत्वेन तस्याबन्तविषयकत्वकल्पनयाऽपि सङ्गतत्वात्।

(१६) 'शर्परे विसर्जनीयः'। अत्र शर्परे न इति न्यासे वासः क्षौमभद्भिः प्सातमित्यादौ 'विसर्जनीयस्य सः' इति प्राप्तसत्वनिषेधेऽपि कुप्वोः ᳲकᳲपौ स्याताम्। न्यासपक्षे कुप्वोरित्यत्रापि चकारेण सत्वं नेत्यर्थकनेत्यस्यानुकृष्टेः। यथान्यासे विसर्जनीय-वचनाद्विकारमात्रस्य बाध इति मनोरमाकृत्। परे तु इदमयुक्तम् कुप्वोरिति सूत्रस्य शर्परे विसर्जनीय एतदविषये जिह्वामूलीयोपध्मानीयसम्पादनेन चारिता-

र्थात् कः करोतीत्यादौ सत्वजिह्वामूलीयादिप्रसङ्गे सत्वदृष्ट्या जिह्वामूलीयोपध्मानीययोरसिद्धत्वात् सत्वं स्यात् कुप्वोरित्यत्र शर्परे इत्यनुवर्त्य शर्परयो ≍ कुप्वो ≍ कःपावित्यर्थेन प्रकृते दोषाभावात्। यदपि शब्दरत्नकृता विसर्जनीयस्य सोऽशर्परे इति न सूचितम्। 'वा शरि' इत्यनेन सत्वस्य विकल्पेन सिद्धावपि कुप्वोरित्यत्राशर्परे इत्यनुवृत्त्या तयोः शर्परेऽप्रवृत्तावपि कुप्वोरिति सूत्रे चाद्विसर्गलाभानापत्तेरित्युक्तम्। तदप्यपरे न क्षमन्ते तत्र विसर्जनीयस्येत्यनुवर्त्य तच्चावर्त्य कुप्वोरिति सूत्रे≍क≍पाविति प्रथमान्तपदसाहचर्येण प्रथमान्तत्वेन विपरिणम्य चाद्विसर्ग इत्यर्थस्य सुलभत्वान्न्यासः सुवच एव प्रतिभाति।

(१७) 'सोपदादौ' अत्र 'सः प्रत्यये' इति सुवचः। कुप्वोरित्यस्यानुवृत्त्या तदादिविधौ कवर्गादौ पवर्गादौ प्रत्यय इत्यर्थेन पयस्पाशमित्यादाविष्टसिद्धः। न चोरः कायतीति विग्रहे गतिकारकेति परिभाषया सुबुत्पत्तेः प्रागेव समासे उरस्केनेत्यादावपदादिकवर्गपरत्वेनाभिमतमपि सत्वं कवर्गादिप्रत्ययपरत्वाभावेन न स्यादिति वाच्यम्। अन्यस्यासम्भव इति मनोरमाप्रतीकमुपादायोपदेश इत्येव कुप्वोरित्यनुवर्त्य यस्मिन् विधिरिति तदादिविधौ कवर्गाद्यवयव इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभाय तेनोरस्केनेत्यादौ सुबुत्पत्तेः पूर्वं न सत्वम्। आदिग्रहणसामर्थ्यलब्धावधारणेन पदत्वयोग्यप्रातिपदिकावयवकुप्वोर्ग्रहणमिति शब्दरत्नकृतोक्तत्वात्। यथान्यासेऽपि सत्वस्यानिष्टत्वात्। पाशकल्पककाम्येत्यादि परिगणनादत्र सिद्धान्ते तत्प्राप्तिरेव नेति तु न शङ्क्यम्। सम्भवप्रदर्शनमेतदिति भाष्याद्युक्त्या तस्य तत्त्वाभावेन शङ्काया निराशाद्दोषलेशोऽपि नेति चेन्न उरः काम्यजस्तीत्यादौ काम्यच्प्रत्ययानुकरणे "प्रकृतिवदनुकरणम्" इत्यतिदेशेन प्रत्ययत्वस्य सामासिकपदत्वस्य च सत्वेन सत्वापत्तेः। यथान्यासेऽपदादिकवर्गपरत्वाभावात् तस्याप्रवृत्तेः। न चेदानीं प्रत्यय इत्यनेन तदादेरुपस्थित्या विसर्गान्ततदादेर्विसर्गस्य सत्वं कवर्गादिप्रत्यये इत्यर्थात् नोक्तदोषः उरश्शब्दस्य तत्तदादित्वाभावादितिवाच्यम्। तथाऽप्युत्तरसूत्रे इणः परस्य विसर्गान्तस्य तदादेः षत्वमित्यर्थापत्त्या दधिसर्पिष्पाशमित्यत्रैव स्यात्। न सर्पिष्पाशमित्यादौ पदस्येति तु सिद्धान्ते व्यधिकरणमेव इदुदुपधस्य पदस्यावयवो यः सकारस्तस्येत्याद्यर्थादिति

नोक्तदोषः । ‘श्रुतानुमित’-परिभाषया श्रुतत्वादिण इति विसर्गविशेषणमिति इणः परविसर्गान्ततदादेरित्यर्थाङ्गीकारेणोक्तदोषवारणे तु काम्यजलौकिकप्रक्रियावाक्यघटक-प्रकृतिप्रत्यययोः प्रत्येकानुकरणे तत्त्वसत्त्वेन तत्र दोषाच्चेत्यलम् ।

(१८) द्विस्त्रिश्चतुः । अत्र ‘सुचः’ इति सूत्रयितुमुचितमिति शेखरग्रन्थः । न चैतन्न्यासे सुचः प्रत्ययत्वेन प्रत्ययग्रहणपरिभाषया सुजन्ततदादेरित्यर्थेन द्विष्करोतीत्यादौ सिद्धावपि परमद्विष्करोतीत्यादौ न स्यादिति वाच्यम् । इसुसोः इत्यत्रोक्तशेखररीत्या धर्म्यन्तरसत्त्वेऽपि तदादीति धर्म्युपतिष्ठते ‘वनोरच’ इत्यत्र यथा द्विस्तदन्तविधिरित्यदोषात् । यद्यपि द्विस्तदन्तविधिसत्त्वेऽपि निर्दिश्यमानपरिभाषया सुजन्तान्तपदावयवनिर्दिश्यमानस्येत्यर्थात् । चतुष्करोतीत्यादौ निर्दिश्यमानस्य रात्सस्येति लोपात् न प्राप्नोतीति चेत् सुज्विधायके ‘द्वित्रिचतुर्भ्यः सुच्’ इत्यत्र ‘द्वित्रिभ्यां सुच् चतुरो लोपश्च’ इति न्यासमाश्रित्य ‘अलोऽन्त्यपरिभाषया चतुरो रेफस्यैव तेन लोपस्यापि विधानेनादोषात् निर्दिश्यमानस्य सुचस्सत्त्वेन षत्वविधायके ‘द्विस्त्रिश्चतुः’ इति सूत्रे इणादिग्रहणाकरणरूपलाघवस्येदानीमपि सत्त्वात् । न च सिद्धान्ते चतुर्ग्रहणसामर्थ्यात् ‘इदुदुपधस्य’, इत्येतद्दृष्ट्याऽसिद्धत्वाभावेन चतुष्करोतीत्यत्र षत्वविकल्पः । न्यासे चतुर्ग्रहणाभावेनासिद्धत्वात् नित्यषत्वापत्तिरिति वाच्यम् । द्वित्रिभ्यामपि ‘इसुसोः सामर्थ्ये’ इत्यनेन षत्वसिद्धे सूत्रस्यैव वैयर्थ्येन सिद्धत्वबोधनादिति केचित् तन्न सामर्थ्यविरहे तस्य सार्थक्यात् । अत्रेदुदुपधस्येत्यनुवर्त्य सुजन्तान्तस्येदुदुपधस्येत्यर्थे ‘द्वित्रिभ्यां सुच्’ इत्युक्तन्यासे चेदुदुपधस्येत्यनुवृत्तिसामर्थ्यात् अप्रत्यय इति पर्युदासाच्च अत्रेदुदुपधस्येत्यस्याप्राप्तेः । अन्ये तु कस्कादिषु भ्रातुः पुत्रशब्दपाठेन लोपनिमित्तरेफस्थानिकविसर्गस्य इदुदुपधेति षत्वं नेति ज्ञापनाच्चेत्याहुः । अपरे तु प्रत्ययावयवभिन्नस्येत्यर्थे विध्यर्थत्वात् पाठो न ज्ञापक इत्याहुः । तथास्य योगस्य इदुदुपधस्येति योगात् प्राक् पाठान्नासिद्धत्वमितीतरे ।

(१९) प्रथमयोः पूर्वसवर्णः । अत्र ‘सुट्शसोः पूर्वसवर्णः’ इति सुवचम् । एवं च ‘प्रथमयोः’ इत्यत्र प्रथमाद्वितीययोर्ग्रहणार्थं दीर्घाज्जसि च इत्यादिज्ञापकानुसरणक्लेशोऽपि न, न च पदलाघवाभाव इति

वाच्यम्, सिद्धान्तेऽप्येकशेषेण प्रथमाद्वयस्य निर्देशेन साम्यात्। किञ्च तथा सति 'सुटि पूर्वसवर्णः' इत्येको योगः, तदनन्तरं 'शसः' इति तस्मादेव शस इत्यस्य 'तस्माच्छसो नः' इत्यत्रानुवृत्तिं कृत्वा शस्ग्रहणं न कार्यम्। एवं च पदलाघवमपीति ध्येयम्।

(२०) 'अर्थवदधातु'रिति। अत्र ह्रस्वो नपुंसके प्रातिपदिकस्य इति सूत्रभाष्योक्तरीत्या तिपमारभ्य सुपः पकारेण तिप्प्रत्याहारमाश्रित्य तद्घटितः 'अतिप्प्रातिपदिकम्' इति न्यासोऽस्त्विति भूषणाद्युक्तम्। तिबन्ततदादिभिन्नं प्रातिपदिकसंज्ञं भवतीति तस्यार्थः। तस्यायमाशयः सुबन्ते तिङन्ते च पर्युदासादेव न संज्ञा, समासे विधायकं वाक्यं व्यावर्त्तकं समासस्येति नियमार्थं पृथगेव सूत्रं तेन [illegible] राज्ञः पुरुष इत्यादेर्न समासस्याव्युत्पन्नतामादेश सिद्धैव सा, कृदन्ते तद्धितान्तेऽपि पूर्वसूत्रेणैव सा सिद्धा कृत्तद्धितग्रहणाकरणलाघवं चेति तन्न सुन्दरम्। धनं वनमित्यादौ नकारादेरर्थवद्ग्रहणप्रत्युदाहरणरूपभाष्योक्तदशदाडिमानीत्यादिवाक्यस्य च पशुगवधन इत्यादौ पशुगवादेस्तिबन्ततदादिभिन्नत्वेन प्रातिपदिकसंज्ञया तद्द्वारकसुबुत्पत्त्या पदत्वेन च नलोपसुब्लोपावङादेशाद्यापत्तेः यथान्यासमेव सुन्दरम्॥ १॥ अत्रैव विभक्त्यन्ततदादिभिन्नमर्थवत्प्रातिपदिकमित्यर्थकम् 'अर्थवदविभक्ति प्रातिपदिकम्' इत्येवास्त्विति कश्चित्। एतन्न्यासे यद्यपि समासग्रहणस्य नियमार्थत्वेन वाक्ये अर्थवत्त्वाभावात् धनाद्यवयवे नकारादावपि दशदाडिमानीत्यादिवाक्ये चापत्तिविरहेऽपि कृत्तद्धितान्ते पूर्वपिष्टसिद्ध्या तदकरणलाघवे सत्यपि यत्र तत्रेत्यादौ त्रलादेः प्राग्दिशीयत्वेन विभक्तिसंज्ञया अविभक्तीति पर्युदासेन प्रातिपदिकत्वानापत्तेः। केवलप्रत्ययस्याप्यर्थवत्त्वेन प्रातिपदिकत्वात् पदत्वे हरिष्वित्यादौ 'सात्पदाद्यो'-रिति षत्वनिषेधापत्तेश्च। यद्यप्यत्रैव सातिग्रहणेन प्रत्ययस्य तद्विरहेऽपि 'नङिसम्बुद्ध्यो'-रिति सम्बुद्धिग्रहणज्ञापितेन प्रत्ययलक्षणेन अविभक्तिपर्युदासाप्राप्त्या भवेत्यादौ तिङन्ते प्रातिपदिकत्वापत्तेः तथा सति तद्धितादिप्रत्यये दोषसम्भवाच्च यथान्यासे शपः प्रत्ययत्वेनाप्रत्यय इति पर्युदासेनादोषात् हेय एवायमिति दोषदर्शिनः॥ २॥ परे त्वत्र 'अर्थवदधातुः प्रातिपदिकम्' इति विन्यस्य शक्तिलक्षणान्यतरवृत्तिमत्त्वमेवार्थवत्त्वं स्वीकृत्य तादृशस्यार्थवत्त्वस्य कृदन्ते तद्धितान्ते मूलकेनोपदंशमि-

इत्यादिवाक्ये समासादावेव सत्त्वेन सुबन्ते तिङन्ते तद्भिन्नवाक्ये चोक्तार्थवत्त्वाभावात् । संज्ञां व्यावर्त्तयन्ति । उत्तरसूत्रे 'कृत्समासौ' इत्येव विन्यस्य क्विबन्तलिङ्भुगादौ उपसज्जनिषमाणन्यायेन अधातुपर्युदासात् अप्राप्तसंज्ञां कृद्ग्रहणेन साधयन्ति समासग्रहण-नियमफलं तु पूर्वोपदर्शितमूलकेनोवदंशमित्यादिवाक्ये तत्संज्ञा-भावरूपमेव केवलस्य प्रत्ययस्य प्रयोगाभावादेव न तत्प्रसक्तिः । उक्ता इरिष्वित्यादावुक्तयुक्त्यैव फलाभाव इत्यादि दर्शयन्तो न्यासं सुवचमेव वदन्ति ॥ ३ ॥ अत्रैव 'अर्थवत् प्रातिपदिकम्' । इति वि-न्यस्य 'सुपो धातुप्रातिपदिकयोः' इत्यत्रत्यधातुग्रहणेन धातोर्न संज्ञा, अन्यथा धातोरप्यर्थवत्त्वेनोक्तसंज्ञया तदवयवस्यापि सुपः प्राति-पदिकावयवत्वेन लुक्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । 'सात्पदाद्योः' इत्यत्र सातिग्रहणेन प्रत्ययस्य न उत्तरसूत्रे तद्धितग्रहणस्य प्रत्ययान्तस्य चेत् तद्धितान्तस्यैवेति नियमेनेतरप्रत्ययान्तस्य न कृदन्ते नियमेनाप्रा-प्तसंज्ञाविधानार्थं कृद्ग्रहणम् । समासग्रहणनियमेन वाक्यस्य नेति सकलेष्टसिद्ध्या न्यासः सुवच इतीतरे ॥ ४ ॥ एतद्विषय एव 'लिङ्ग-वत् प्रातिपदिकम्' इत्यन्ये । धनाद्यवयवनकारादौ लिङ्गवत्त्वाभा-वात् केवलप्रत्यये च तत्त्वाभावेन धातौ लिङ्गवत्त्वस्य सर्वथाऽभावेन संज्ञाया अप्राप्त्या इतरत्र तत्त्वेन तत्प्राप्त्या सकलेष्टसिद्धेः । पूर्ववत् तिङन्ताद्यतिरिक्तप्रत्ययान्ते तद्वारणाय तद्धितग्रहणस्य नियमार्थक-तायाः कृद्ग्रहणस्य विधायकतायाश्च समासग्रहणनियमस्य चाव-श्यकत्वेन सर्वमवदातमिति चेन्न, अव्यये लिङ्गवत्त्वाभावस्य सकला-भिमततया प्रातिपदिकत्वाभावेन सुबुत्पत्तिविरहात् पदत्वाना-पत्तेः । अव्ययीभावेऽप्युक्तदोषस्य सत्त्वाच्च । यद्यव्ययादाप्सुप इति ज्ञापकादव्ययेभ्यः सुबुत्पत्तिः, एवं नपुंसकतापादकाव्ययीभावश्चेति सूत्रबलादेव अव्ययीभावस्याव्ययत्वे 'लुङ्मुखस्वरोपचाराः प्रयो-जनानि' इत्युक्त्वा इतरफलस्यान्यथासिद्धिं प्रदर्श्य सुब्लुक्फलार्थं न ह्येकमुदाहरणमिति भाष्योक्त्या चाव्ययीभावे लिङ्गवत्त्वप्रयुक्तका-र्यस्य विज्ञानादुपदिशमित्यत्र 'ह्रस्वो नपुंसके' इति ह्रस्वत्वम् अधि-हरीत्यादौ प्रातिपदिकसंज्ञाहारकसुबुत्पत्त्या पदत्वं च सिद्ध्यति तदा न्यासः सम्यगेवेति ॥ ५ ॥

(२१) यत् तु प्रक्रियालाघवाय स्वौजसित्यत्र सुस्थाने हरेवास्तु

सर्वत्र सुग्रहणे रुग्रहणमेव कर्त्तव्यम्। तथा चानेकयोगविषयक-‘ससजुषो रुः’ इत्यस्य वाक्योपप्लवाभावो लाघवमिति तन्न, एवं सति सुपि चेत्येतत्स्थानीयरुपि चेत्यनेन राम इत्यादौ दीर्घापत्तेः। सिद्धान्ते तु सुस्थानिकस्य ‘ससजुषो रुः’ इति विहितस्य रोरसिद्धत्वात् न तत्प्राप्तिरिति तदपि न सुपि चेत्यस्य स्थानेऽमो मकारमारभ्य सुपः पकारेण प्रत्याहारमाश्रित्य अपि च इति न्यासान्तरकरणेन ‘यञि च’ इत्यपरन्यासेन वा निर्वाहात्। पन्था इत्याद्यर्थं क्रियमाणस्य ‘पथिमथो’ति सूत्रे दीर्घाकारस्यारम्भेण प्रथमैकवचने दीर्घाभावज्ञापनाच्च, अन्यथा पथ्यादेर्नकारस्य क्षाकारं विधायैकारस्थानिकाकारेण सह पररूपेण निष्पन्नस्य पन्थादिशब्दस्य यञादिरुप्परकादन्तोरुत्वेन दीर्घेणैवेष्टसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। न च सम्बोधने हे पन्था इत्यादौ ह्रस्वान्तात् परस्य एङ्ह्रस्वात् इत्यनेन सोर्लोपापत्तिर्वाच्या परत्वान्नित्यत्वाच्च रुपि चेति दीर्घेण लोपस्य बाधात्। न च यशोऽत्र पयोऽत्रेत्यादौ अतो रोरिति हश्या ‘ससजुषोरुरिति विहितरुत्वस्यासिद्धत्वेनोत्वानापत्तिः सूत्रारम्भसामर्थ्यादिति तु वक्तुमशक्यम्। शिवोऽर्च्य इत्यादौ सिद्धान्ते ससजुषोरुरिति विहितस्यैव रोः सर्वत्र सम्भवाद्विधानसामर्थ्यान्नासिद्धता सम्प्रति प्रथमैकवचनस्य तद्भिन्नस्यापि सम्भवात् तत्र चारितार्थ्येन सामर्थ्याभावात्। न च तदर्थं रुत्वविधायकस्य सप्ताध्याय्यामेव पाठोऽस्त्विति चेन्न पिपठारित्यत्र रुत्वे कर्तव्ये पूर्वत्रासिद्धे न स्थानिवदिति निषेधाप्रवृत्त्या कमिधातोर्नुमि संयोगान्तलोपे कनिति रूपं न स्यात् संयोगान्तलोपस्यासिद्धत्वाद्रुत्वप्रवृत्तेरनिष्टापत्त्या च तथा पाठस्याशक्यत्वादिति वाच्यम्, रुत्वार्थम् ‘अहन्’ एतद्विहितरुत्वस्याप्युत्वविधायकशास्त्रेणासिद्धत्वात् रो रे वाफले विशेषाभावेनैकस्मिन्नेव विधातव्ये ‘ऽहन्’ ‘रोऽसुपि’ इति सूत्राभ्यामुभयोर्विधानारम्भसामर्थ्यादुत्वे रुत्वस्य सिद्धत्वकल्पनाद्यशोऽत्रेत्यादिसिद्धेः किं पुनः प्रक्रियागौरवप्रस्तेन सुस्थाने ‘ससजुषः’ इति रुविधानेनेति तदपि न रुप्परत्वापरत्वसाधारण्येनाहस्विति रोर्विधानेऽहर्भातीत्यादौ ‘भो भगो’ इति यत्वेन रस्य विधाने तदभावेन च फले विशेषस्योपलब्धेः। रेफविधानेऽहर्स्वस्त्यत्र ‘रोः सुपि’ इति नियमेन विसर्गानापत्तेश्च। रुत्वरत्वविधायकयोरेकतरसूत्रारम्भसामर्थ्यात् पूर्वत्रासिद्धम् इत्येतदेकवाक्यतापन्नेनादुभयशास्त्र प्रयोज्य-

बोधविषयपूर्वत्वेन गृहीते शास्त्रसमुदाये उत्वविधायकशास्त्रघटितत्वेन संकोचादुत्वे कर्तव्येऽहन्नित्येतद्विहितरुत्वस्य सिद्धत्वे फलितेऽपि सकलस्य रुत्वस्य सिद्धत्वे प्रमाणानुपलब्धेश्च। न च 'रूपरात्रि' इति वार्त्तिकेन रुविधानमेवोक्तार्थे ज्ञापकमस्तु, अन्यथा 'हशि च' इत्युत्वे कर्तव्ये रुत्वस्यासिद्धत्वाद्रोरीति रेफलोपे रोऽसुपीति रेफादेशात् फले विशेषाभावेन तद्वैयर्थ्यं स्पष्टमेवेति वाच्यम्। 'भो भगो' इति यत्वार्थं तस्यावश्यकत्वात्। न च रुत्वस्य यत्वमात्रफलकत्वे प्रक्रियालाघवाय यकार एव विधातव्ये तद्विधानमेवोक्तार्थे ज्ञापकमस्त्विति वाच्यम्। अहन्-शब्दात् 'तत्करोति' इति णिचि टिलोपे ततः क्विपि ततो गोशब्देन समासे पश्चाद्रूपशब्दसमभिव्याहारेऽहःशब्दस्यानुमानिकस्थान्यादेशभावेनाह्न शब्देऽहन्शब्दत्वात् पश्चात् परादिवद्भावेन गोहशब्देऽहन्शब्दत्वाद्रूपरात्रीति वार्त्तिकेन हकारस्य रुत्वे गोहरमित्यवस्थायां भो भगो इत्यस्याप्राप्त्या रोरीति लोपे गोरूपमिति अनेन वार्त्तिकेन यत्वविधाने गोयरूपमित्यापत्तेः। नन्वेवमपि वार्त्तिकेन रुत्वविधानं व्यर्थमेव अहन्-शब्दस्य लोप एव विधातव्यः, स चाहो रूपमित्यत्र नकारस्य गोरूपमित्यत्र हकारस्येति। एवं च तत्सामर्थ्यादेवोत्वदृष्ट्या रुत्वस्य नासिद्धत्वमिति चेन्न रूपशब्दादाचारक्विबन्तात् लङि अरूपदिति तस्य गोहशब्दसमभिव्याहारे वार्त्तिकेन रुत्वे गोररूपदित्येष्यते लोपविधाने तु हकारस्य लोपे पूर्वरूपे गोरूपदिति फलभेदात्। यदि तु गोरूपदित्यादीनामनभिधानं मनुषे तदैतद्वार्त्तिके रुविधानसामर्थ्येनाहन्निति वदेतद्रूपस्योत्वं प्रति सिद्धत्वकल्पनेऽपि सकलरुत्वस्य सिद्धत्वे न मानमिति समाधानं बोध्यम्। न च 'अतो रोः' इति सूत्रेऽप्लुतादग्रहणमेवोक्तार्थे ज्ञापकमस्तु अन्यथा सुस्रोतोऽत्र स्नाहीत्यादौ रुत्वस्यासिद्धत्वेनैव दोषाभावादिति वाच्यम्। आगच्छ, भवान् देवदत्त ३ अत्रेत्यत्र वात्सी बन्धुरित्यत्र वात्स्या इकारस्य प्लुतताकरणपराकडारसूत्रभाष्यप्रकृते नवीनमतेऽसम्बोधनेऽपि 'दूराद्धूते च' इति प्लुतत्वात्। वौंजसोति सूत्रविहितस्य रोरुत्वाभावाय तद्ग्रहणस्य चारितार्थ्यात्। हे दीर्घाहो अत्र स्नाहीत्यत्र रोरसिद्धत्वाभावस्य हे अहः३ रूपमस्तीत्यत्रासिद्धत्वाभावस्य कल्पनाया उक्तत्वात् तत्रोत्वापत्तेश्च। होतव्या 'अदोषितगृहा ३ इ' विचार्यमाणानामिति च इत्यत्राकारस्य प्लुतत्वे रोरसिद्धत्वाभावेन तत्रा

वृत्त्या चारितार्थ्यात्। यत् तु द्वितीयाप्लुतग्रहणमेवोक्तार्थज्ञापकं तत् तु तिष्ठतु पय आग्निदत्तेत्यत्रोत्वव्यावृत्त्यर्थं तदिदानीं रुत्वस्यासिद्धत्वान्निष्फलम् एवमदित्युभयत्र तपरकरणस्यापि ज्ञापकता सम्भवति तस्यापि देवा अत्र स्थ आगन्तेत्यत्रोत्वव्यावृत्तिरेव फलं रुत्वस्यासिद्धत्वात् तदपि न संभवतीत्युक्तं तन्न। तिष्ठतु देवदत्त आग्निदत्त ओपा अत्र देवदत्त आगन्तेत्यादौ तस्य तस्योत्वव्यावृत्तये चारितार्थ्येन ज्ञापकताया एवासम्भवादिति दिक्।

( २२ ) 'विभक्तिश्च' सूत्रमिदं मास्तु न विभक्तावित्यत्र सुप्तिङ्ग्रहणमेवास्तु अष्टन आविभक्तावित्यादिषु विभक्तिघटितेषु सुप्ग्रहणमेवास्तु 'त्यदादीनामः' इत्यत्र सुपीत्यनुवृत्त्यैव सिद्धेः। न च त्यदादीनाम इत्यत्र सुब्ग्रहणे यत्र तत्रेत्यत्र प्राग्दिशीये परेऽत्वानापत्तिरिति वाच्यम्। 'प्राग्दिशो विभक्तिः' इत्यनेनापि सुप्संज्ञाया एव विधानेनादोषात् न च सुप्संज्ञायामेतर्हीत्यत्र सुपि चेति दीर्घापत्तिः (सुपि चेत्यत्र 'यिभच' इति न्यासेनैव निर्वाहात्। यकारे भकारे चेति तदर्थात्। न चैवं ब्राह्मणभिस्सेत्यत्र दोषः। अस्याङ्गाधिकारीयत्वेनाङ्गसंज्ञानिमित्तक इत्यर्थात् प्रत्ययलाभेन यादौ भादौ प्रत्यये इत्यर्थाददोषेऽपि सारसायनभक्त इत्यत्र भादिप्रत्ययस्यैव सत्त्वेन दोषो दुर्वार इत्यपि न 'अतो भिसः' इति सूत्रान्तरसाहचर्येण तत्राङ्गसंज्ञानिमित्तकभिसः सुप एव सम्भवात् तादृशस्यैव ग्रहणेनादोषात्)। अकारान्ताद्विहित एव वा विधानेन यञादिसुप्परत्वाभावाच्च एतर्हीत्यादौ दीर्घस्य न अकारोच्चारणसामर्थ्यात् पररूपस्यैव सत्त्वात्। किंच रेफादौ दीर्घव्यावृत्तये रेफादिभिन्ने यञादौ सुपि परे दीर्घ एतदर्थकेन 'सुप्यपि च' इति न्यासेनाप्यदोषात्। न च यत्र तत्रेत्यादौ सुपो धात्विति त्रलादेर्लुगापत्तिः। कुत्रति यत्रतीत्याद्यावाचारक्विबन्तनिष्पन्ने सुबन्तत्वेन पदत्वे अतो गुण इति न स्यात्। इदानीं तदानीमित्यादौ 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तता च स्यादिति वाच्यम्। त्रतसिलादीनां विधानसामर्थ्येन अत्रानुनासिक इति निर्देशेन वा लुगनापत्तेः। पदसंज्ञाविधायके तिङोऽष्टाध्याय्यामेकसूत्रोपात्तत्वेन सुपोऽपि तादृशस्यैव ग्रहणेन तद्धितान्तस्य पदत्वाभावादतो गुण इत्यस्य प्रवृत्त्येष्टसिद्धेः। त्रलादिलित्करणेन प्राग्दिशीयेऽनुदात्तस्याप्रवृत्तेश्च। अन्ये तु त्रलादिविधानसामर्थ्येन न लुगिति तु वक्तुमशक्यस्तद्धितान्तत्वा-

दव्ययसंज्ञायां सुब्लुकि फलस्य सत्त्वात्। लुक् तु सन्निपातपरिभाषया न भवतीति वदन्ति। केचित् तु 'इवेन सह समासो विभक्त्यलोपश्च' इत्यत्रापीदानीं सुब्ग्रहणेन सुप्संज्ञकस्य त्रलादेरनेनालुकि तत्रैवेत्यादौ त्रलादिविधानस्य चारितार्थ्यात् सामर्थ्यविरहेण लुग्व्यावृत्तिविरहेऽपि क्तान्तेन समासविधायक 'तत्र' इत्येतत्सूत्रनिर्देशेन प्राग्दिशीयविभक्तेर्लुगभावबोधनात्। एवं सति तत्तद्विभक्तिस्थाने त्रलाद्यादेशा एव विधातव्याः 'प्राग्दिशः सुप्' इत्यपि न कार्यं स्थानिवत्त्वेनैव सुप्त्वनिमित्तककार्यस्य सत्त्वादित्यपरमनुकूलमित्याहुः। यद्यपि सर्वविषयेऽप्युडिदमित्यत्र ञितीत्यनुवर्त्तते तृतीयादिग्रहणेन तृतीयामारभ्य प्राग्दिशीयाः प्रत्यया गृह्यन्ते इति ञित्स्वरं बाधित्वा विभक्तिस्वरार्थं दानीमो मध्येतसंज्ञानिषेधाय च विभक्तिसंज्ञावश्यिका तथापि दानीमोऽदन्तत्वस्वीकारेण मकारस्यान्त्यत्वाभावात् न विभक्तावित्यत्र सुप्तिङ्ग्रहणेन चेत्वनिषेधस्य सुलभत्वात्। उडिदमित्यत्रापि सुप एव सम्बन्धाद्विभक्तिघटिते सर्वत्रैव सुप्करणेनादोषात्। यत् तु त्रलादेर्लित्वस्य तत्रेत्यादौ चारितार्थ्येन सर्वत्र सर्वदेत्यत्र सर्वस्याद्युदात्तः स्यात् सुपीत्यर्थकेन 'सर्वस्य सुपि' इति प्रतिपदोक्तेनाद्युदात्तता स्यादित्युक्तम् तदपि न तादि दादियादिभिन्ने सुपि सर्वस्याद्युदात्त इत्यर्थकेन 'सर्वस्य सुप्यत्थेषु' इति न्यासेनादोषात्। इतरे तु अष्टाविवाचरतीत्याचारक्विबन्तात् लटि तिपि शपं बाधित्वा परत्वात् प्रतिपदोक्तत्वाद्विभक्तिग्रहणसामर्थ्याच्च अष्टनो नकारस्यात्व अष्टातीति प्रयोगार्थम् 'अष्टन आविभक्तौ' इत्यत्र विभक्तिग्रहणमावश्यकम् तत्र सुब्ग्रहणेन तन्न सिध्येदिति वदन्ति। 'अष्टन आ सुप्तिङ्' इत्येव विन्यस्याष्टातीत्यस्यापीष्टत्वेन तसादीनां सुप्संज्ञैवास्तु तर्हीत्यादावुक्तयुक्तेरेवादोषादितीतरेतरे। परे तु प्राग्दिशीयानामासतां विभक्तिसुप्संज्ञे त्यदाद्यत्वफलाय त्यदादीनां प्राग्दिशीयेषु तसादिषु पाठोऽस्तु सुपि चेत्यत्र यिभ चेत्येतावतैव सिद्धे अष्टन इत्यत्र सुप्तिङ्वास्तु दानीमो मकारस्येत्ववारणाय इत इत्यत्रान्तोदात्तविषये चोक्त एव प्रकारः। तथा च लाघवातिशयात् मास्तु विभक्तिश्चेति सूत्रमिति वदन्ति।

(२३) 'एकवचनं सम्बुद्धिः' अत्र 'सुःसम्बुद्धिः' इत्येव सुवचम्। न च सप्तमीबहुवचनेऽतिव्याप्तिः सम्बोधने चेत्यतः सम्बोधन इत्यनुवृत्तेरेव तदप्रसङ्ग इति नव्याः। अत्र केचित् सुः सम्बुद्धिरिति वक्तव्ये

एकवचनग्रहणादेकार्थं उच्यते तेन तावन्मात्रे सुप्रत्ययस्य संज्ञार्थम् । अन्यथा 'सामन्त्रितम्' इति पूर्वसूत्रे तदन्तस्यामन्त्रितसंज्ञाकृतेति प्रक्रमाभेदायेयमपि संज्ञा तदन्तस्यैव स्यादित्याहुः । तदपि न सम्बुद्धावङ्गस्य गुण इति व्यवहारात्र तदन्तस्य संज्ञेति शेखरोक्तेः । तस्मादुदृष्टार्थमेव यथान्यासमिति ।

(२४) 'लशक्वतद्धिते' यत्त्वत्र 'कतद्धिते' इत्यस्तु मास्तु ल-श-ग्रहणम् । शबादिप्रत्ययस्थले सर्वत्र छकारघटित-छबादीनां विधानेन 'चुटू' इत्यनेनैव छस्येत्संज्ञेति तन्न, ल्युट् ल्यु-प्रत्ययादौ लस्येत्संज्ञाभावेन लित्स्वरानापत्तेः, छबादेश्छस्येयादेशापत्तेश्च । न चेत् संज्ञालोपाभ्यामपहारे छकाराभावेन नापत्तिरिति वाच्यम् । इयादेशस्य तद्बाधकत्वात् । अन्यथा तद्धितेऽपि चुटू इत्यस्य प्रवृत्त्या छकाराभावेन तत्रापि तस्याप्रवृत्त्या वैयर्थ्यं स्पष्टमेव । न च फढादिसाहचर्यात् तद्धितप्रत्ययादेश्छस्यैव तदिति चेत् मत्वर्थाच्छः' मत्वर्थीय इत्यत्र कृतश्छस्य तदादेशानापत्तेः । तस्यापि तद्धिताधिकार एव पाठ इत्यपि न कृत्स्वरानापत्तेः । ल्युट् ल्यु इत्यत्र ल्युल् युल् इति न्यासेन लित्स्वरे सिद्धेऽपि द्वितीयदोषस्य तादवस्थ्यात् ।

(२५) 'तस्माच्छसो नः पुंसि' नन्वत्र 'शसो नुक् पुंसि' 'शसो नुम् पुंसि' इति वा सूत्रमस्तु । अक इत्यनुवर्त्याकः परस्य शसो नुकि नुमि वेत्यर्थः । एवं च 'आदेः परस्य' इति परिभाषया 'मिदचोऽन्त्यात् परः' इत्यनया वा शसोऽकारस्यान्तावयवो नुक् नुमागमो वा पश्चात् पूर्वसवर्णदीर्घे 'संयोगान्तस्य' इति सलोपे सिद्धं रामानिति । लिह इत्यादौ न दोषः शसोऽकः परत्वाभावात् । एताँश्चतुरो गाः पश्यतीत्यादावपि ओकारसत्त्वेऽकः परत्वाभावेन 'औतोम्-शसोः' इत्याकारेऽप्यकः परस्य शसोऽभावात् दोषाभावेऽपि विश्वप इत्यादौ 'आतो धातोः' इत्यालोपे 'अचः परस्मिन्' इति । पञ्चमीसमासपक्षे स्थानिवद्भावेनाकः परत्वान्नुगाद्यापत्तेः । पञ्चमीसमासप्रत्याख्याने तु प्रकृते स्थानिवद्भावाभावेनादोषात् । पञ्चमीसमासत्वेऽपि हे गौरिति भाष्योदाहरणात् तस्यानित्यत्वेनाप्रवृत्तेः, अनित्यत्वस्येष्टानुरोधिप्रवृत्तत्वात् । अष्टावित्यत्रात्वे कृते जश्शसोरौशादेशे तस्य न नुक् आकारस्य परनिमित्तत्वेन बहिरङ्गतयाऽसिद्धत्वादकः परत्वाभावेनादोषात् न्यासं सुवचं मन्यामह इत्यलम् ।

(२६) 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' अत्र 'यस्मात् प्रत्ययस्तदादि प्रत्ययेऽङ्गम्' इत्येवास्तु मास्तु विधिग्रहणम्। ननु विधिग्रहणाभावे दिग्योगपञ्चम्या यस्मात् प्रत्ययः परस्तस्मिन् प्रत्यये परे तदाद्यङ्गमित्यर्थेन स्त्यै धातोः 'स्त्यायतेर्ड्रट्' इति ड्रटि टित्वाद्ङीपि स्त्री इति इदम्-शब्दादतुपि 'किमिदम्भ्यां वो घः' इति वकारस्य घकारे 'आयनेयी' इति सूत्रेणेयादेशे उगित्वाद्ङीपि इदम ईशादेशे यस्येति लोपे इयती इति तस्य पूर्वोक्तस्त्रीशब्दसमवधाने स्त्री इयतीत्यत्रयति परे स्त्रीत्यस्याङ्गत्वात् 'स्त्रियाः' इतीयङापत्तिः, प्रत्यासत्त्या यदजादिप्रत्यये इयङादेशस्तन्निरूपिताङ्गस्य विवक्षितत्वेन सिद्धान्तेऽपि सुनिरूपिताङ्गत्वस्य स्त्रीशब्दे सत्त्वेनेयति परे इयङादेशस्य दुर्वारत्वमित्यपास्तम्। सति च विधिग्रहणे 'ल्यब्लोपे' इति पञ्चमी यमुद्दिश्य विहित इत्यर्थाद्यः प्रत्ययो यन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयस्तस्मिन् परे तदादेस्तत्पदेनोद्देश्यताश्रयस्य परामर्शादुद्देश्यताश्रयनिष्ठाद्यवयवतानिरूपकसमुदायस्येत्यर्थादियनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वस्य स्त्रीशब्देऽभावेन न दोषः। अत्र केचित् इयङि कर्त्तव्ये इकारलोपस्य स्थानिवत्त्वेनेकारव्यवधानाद्विधिग्रहणाभावेऽपि नापत्तिरिति तन्न वाक्यसंस्कारपक्षे, एवं वारणेऽपि पदसंस्कारपक्षे पूर्वत्वेनादृष्टत्वात् स्थानिवत्त्वायोगेन दोषस्य सत्त्वात् न पदान्तेति निषेधाच्च। न चात्र यस्येति लोपस्याभीयत्वेनासिद्धत्वात् न दोष इति वाच्यम् यस्येति लोपापेक्षया स्त्रिया इति सूत्रेऽधिकस्य स्त्रीशब्दापेक्षत्वस्य सत्त्वेन समानाश्रयत्वाभावात्। तत्त्वं चासिद्धत्वाश्रयशास्त्रप्रवृत्तौ निमित्तत्वेनाश्रीयमाणशब्दसमुदायान्यूनानतिरिक्तनिमित्तकत्वमिति तदपि न, 'कार्यमनुभवन्' इति परिभाषया स्त्रीदम्शब्दयोर्निमित्तत्वायोगादवशिष्टस्य तुल्यत्वात्। यदपि 'वामशसोः' इत्युक्तसूत्रसाहचर्येणेयङ्विधायकस्याप्यजादौ सुप्येव प्रवृत्तेः स्त्रीयतीत्यादौ न दोष इति तदपि न, सूत्रान्तरसाहचर्यस्य भाष्यादाववहेलनात् वासुदेवार्थकाशब्दादौ विभक्तौ वृद्धौ स्त्रौ औ इत्यत्र पूर्वान्तत्वेन सुप्त्वेन दोषाच्च। किञ्च भनक्तीत्यादौ श्नमादिपरे भ इत्येतावन्मात्रादङ्गत्वेन 'अतो-दीर्घो यञि' इति दीर्घापत्तेः। नन्वत्रापि भूसुवोरिति सूत्रात् तिङनुवर्त्य यजादिसार्वधातुके तिङि दीर्घविधानेन न दोष इति वाच्यम्। 'ज्ञाजनोर्जा' इति सूत्रस्थभाष्यविरोधात्। तत्र हि जानातीत्यादौ श्न-

स्वविधानेऽपि अतो दीर्घ इति दीर्घे रूपसिद्धौ दीर्घोच्चारणमङ्गवृत्त-परिभाषाज्ञापनार्थमित्युक्तम्, तिङोऽनुवृत्तौ आप्रत्ययस्य तिङ्त्वा-भावेन भाष्यविरोधः स्फुट एव। किञ्चाभनकगित्यत्राकचि परे अभन-इत्यस्याङ्गत्वेन 'अल्लोपोऽनः' इत्यकारलोपापत्तेः। 'अल्लोपोऽनोऽनाके' इति न्यासेन वारणेऽपि लाघवाभावात्। अ-शब्दादौ विभक्तौ वृद्धौ औ इति वारि औ इत्यत्रान्तादिवद्भावेन औ-इत्यस्मिन् विभक्तित्वेन तस्मिन् वारीत्यस्याङ्गत्वे इकोऽचीति नुमापत्तेश्च। न च 'इकोऽचि' इति सूत्रे सुपोऽनुवृत्त्यैव सिद्धे विभक्तिग्रहणमनतिदिष्टविभक्तिग्रहणार्थमिति प्रकृते तत्त्वस्यातिदिष्टस्यैव सत्त्वादिति तन्न विधिग्रहणाभावे तदादी-त्यस्यापि वैयर्थ्येन विधिशब्दाध्याहारात् 'ल्यब्लोपे' इति पञ्चम्यैवेति तेन ज्ञापनेनोक्तार्थस्यैव दर्शितरीत्या लाभसम्भवेनादोषात्। तदादि-ग्रहणं हि करोमीत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं इदानीं मिप्प्र-त्ययस्य विकरणविशिष्टात् परत्वेन तस्मिन् अङ्गसंज्ञासिद्धेति तद्वैयर्थ्यं स्पष्टमेव। यत्तु विधिग्रहणाभावे व्याप्तिन्यायाद्यः प्रत्ययो यस्माद्वि-धीयते तदादि यस्मिन् कस्मिँश्चित् प्रत्यये परतोऽङ्गसंज्ञकमित्यर्थे देव-दत्त ओदनमपाक्षीदित्यादौ देवदत्तोत्तरं सुपो विधानात् देवदत्तादेः पच्छब्दान्तस्य लुङ्यङ्गसंज्ञायां देवदत्तात् पूर्वमप्यडापत्तिः पुनर्वि-धिग्रहणे तु सामर्थ्यात् प्रत्यासत्त्या यस्माद्यः प्रत्ययः क्रियते तस्मिन्नेव प्रत्यये तदाद्यङ्गसंज्ञमित्यर्थेनादोषादिति तन्न, तदादिग्रहणसामर्थ्या-द्विधिरित्यस्याध्याहारेण पञ्चम्यां यन्निष्ठोद्देश्यतानिरूपितविधेयता-श्रयो यस्तदादि तत्पदेनोद्देश्यताश्रयस्य यत्पदेन धृतस्य परामर्शात् प्रत्यये परेऽङ्गमिति तस्मिन्नेव प्रत्यये यस्मिन् कस्मिन् वेति जिज्ञा-सायां प्रत्यासत्त्या तस्मिन्नेवेत्यर्थस्य पुनर्विधिग्रहणाभावेऽपि लाभे बाधकाभावात् विधिग्रहणं व्यर्थमेवेति प्रतिभाति।

( २७ ) 'सुपि च' 'अतो दीर्घो यञि' इत्युभयत्र 'अतो दीर्घो यञि' इत्येवास्तु अत्र सार्वधातुकपदानुवृत्तिरपि मास्तु अदन्ताङ्गस्य दीर्घः स्याद्यञादाविति हि सूत्रार्थः। अङ्गाधिकारात् प्रत्यासत्त्याऽङ्ग-संज्ञानिमित्तकस्यैव यञादेर्ग्रहणेन रामाभ्यां भवामीत्यादाविष्टसिद्धे-रिति चेन्न, केशवोऽङ्गनेत्यादौ वप्रत्यये नप्रत्यये च दीर्घापत्तेः। एतद-र्थमुभयत्राकाराद्यवयवकावानावित्येव विधाय दीर्घबाधकपररूपेण तयोः सिद्धावपि विष्णु इत्यकृतसन्धेर्नप्रत्यये उत्तरपदलोपे च सिद्ध्यति

तन्न सिद्धयेत् । न च नानेत्यत्र नाञ्प्रत्यये ञित्करणात् तद्धिते परे दीर्घो नेति कल्पनया केशवेत्यादौ दोषाभावेन पूर्वोक्तावानाविति न्यासस्याप्यनावश्यकत्वेन दोषाभाव इति वाच्यम् तस्यैञ्नित्यादेर्रिति स्वरार्थत्वात् । 'वेर्नोदात्तः' इति न्यासेनैव स्वरसिद्धौ ञित्करणमुक्तार्थज्ञापकमेवेति केचित् । यत् तु, शरादीनां चेत्यत्रादन्तशरादिपाठसामर्थ्यात् तद्धिते परे नानेन दीर्घ इति ज्ञापनम्, अन्यथा शरावतीत्यादावनेन दीर्घे तद्वैयर्थ्यं स्पष्टमिति तदपि न, तस्य शरस्य इः शरे नपुंसकह्रस्वत्वे शरि ततो मतुपि दीर्घे शरीवतीत्याद्यर्थकत्वात् । यदप्याहुः सुपि चेति यथान्यासे 'नलोपः सुप्, इति सूत्रे सुप्त्वतद्व्याप्यान्यतरधर्मावच्छिन्ननिमित्तताककार्ये नलोपोऽसिद्धो भवत्युक्तन्यासे तत्त्वाभावेन नलोपासिद्धेरबोधनेन दीर्घापत्तिः, केशव इत्यादौ च तत्त्वापत्तिरिति तदपि न, सुप्त्वतद्व्याप्यधर्मवन्निमित्तकेऽसिद्धत्वबोधनेन सुप्त्वव्याप्यभ्याम्त्वाद्यन्यतरधर्मवन्निमित्तके दीर्घेऽसिद्धत्वबोधनेन शृङ्गवृन्देति सूत्रे आकारकरणेन तद्धितनिमित्तकदीर्घो नेति ज्ञापनेन चोभयत्रादोषात् । शृङ्गवृन्दशब्दाभ्यां णिचि क्विपि टिलोपे शृङ्गारक इत्याद्यर्थं तस्यावश्यकत्वेन कथमाकारस्य ज्ञापकतेत्यपि न, 'आरगुदीचाम्' इत्यत्राकारोच्चारणमन्यतो विधानार्थं तेन पाण्डार इति भाष्योक्तेरसङ्गत्यापत्त्याचचाणण्यन्तादाचारक्विब्नेति ज्ञापनेनोक्तोदाहरणस्यानभिधानादाकारोच्चारणज्ञापकतायाः सुस्थतरत्वात् । ज्ञापकस्य सजातीयापेक्षत्वे आबन्तेभ्य एवानभिधानज्ञापने तु दोषः स्यादेवेति तत्त्वम् । अत्र 'भ्यि च, इति न्यसनीयमिति केचित् । अत्र यद्वक्तव्यं तद्विभक्तिश्च इत्यत्रोक्तम् । अत्रैव 'ङभ्याम्' इति न्यास इत्यन्ये । अत्र यद्वक्तव्यं तत् 'बहुवचने झल्येदित्यत्र वक्ष्यते । उभयन्यासे बहुवचने झल्येदित्यत्र बहुवचनग्रहणादरकरणं लाघवमिति ध्येयम् ।

२८ 'बहुवचने झल्येत्' अत्र 'बहुवचने झलिक्' इति न्यासे रामेभ्य इत्यादावेक्यादगुण इति गुणेन निर्वाहेऽपि 'सम्बुद्धौ च' इत्यत्रापीकः सम्बन्धे हे रमे इति न सिद्धयेत् इकि रमा इ सु इति दशायां पूर्वं पूर्वमन्तरङ्गमिति न्यायेन पूर्वं गुणे एङन्तत्वात् सम्बुद्धिलोपे इष्टसिद्धावपि वार्णादाङ्गमिति परिभाषयाऽऽद्गुणादपि पूर्वं 'ह्रस्वस्य गुणः' इतीकारस्य गुणे सम्बुद्धिलोपे आकारैकारयोर्वृद्धौ हे रम इत्यस्यासिद्धेः । सम्बुद्धौ च, इत्यत्र विषयसप्तमीस्वीकारे विभक्त्युत्पत्तेः पूर्वमेवेकि गुणेऽत्र

निर्वाहेऽपि ज्ञानयोरिति न सिद्ध्येत् 'ओसि च' इतत्यत्रापीकः सम्बन्धादिकि स्थान इ ओसिति स्थितावन्तरङ्गमपि गुणं वाधित्वा 'वार्णादाङ्गम्' इति न्यायेन नुम एव प्रथमप्रवृत्तेः। न च समाननिमित्तकत्वरूपसमानाश्रयत्वे एवास्य न्यायस्य प्रवृत्त्या न दोष इति वाच्यम्। इयायेयेषित्यादिमुख्योदाहरणस्यैवासिद्ध्यापत्त्याऽऽङ्गवार्णयोः समानकार्यित्व एव तत्प्रवृत्तिस्वीकारात्। तत्त्वं च वार्णशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयताश्रयवृत्ति-पर्याप्तोपस्थितीयमुख्यविषयताप्रयोजकपदघटितत्वम्। इहापि गुणशास्त्रीयसप्तम्यन्ताच्पदप्रयोज्यविषयताश्रयेकारवृत्तिपर्याप्तोपस्थितीयमुख्यविषयताप्रयोजकेकपदघटितत्वेन तत्त्वात्। एतेनेह 'वार्णादाङ्गम्' इत्यस्याप्रवृत्तेरन्तरङ्गत्वात् पूर्वं गुणेनेष्टसिद्धिरिति मन्दोक्तमपास्तम्॥ १॥ न चैतदर्थमिडेवास्तु विभक्त्यवयवे तस्मिन् इगन्ताङ्गत्वाभावाद् नुमोऽप्राप्त्या तत्सिद्धावपि गङ्गे रमे इत्यादौ पूर्वं गुणेऽपि पञ्चमीसमासाश्रयणात् स्थानिवद्भावेनेकारव्यवधानात् सम्बुद्धिलोपानापत्तेः। हल्ङ्यादिलोपोऽपि न स्थानिवत्त्वेनेकारव्यवधानात्। पञ्चमीसमासस्यानित्यत्वेन भाष्ये प्रत्याख्यानाद्वा तस्य सिद्धत्वेऽपि निर्जरेस्य इत्यादाविटि अजादिविभक्त्यव्यवहितपूर्वत्वेन जरसादेशापत्तेः। सन्निपातपरिभाषया तस्य सुसमाधेयत्वेऽपि रमया रमयोरिति न सिद्ध्येत् तद् यथा 'पूर्वं पूर्वमन्तरङ्गम्' इत्यस्य गुणे सत्त्वेऽपि उपेद्ध इत्येतद्विषये 'न धातुलोपार्धधातुके' इत्यत्रत्यभाष्योक्तस्यार्थवद्द्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपबहिरङ्गत्वस्य गुणे अर्थवदेकसम्बन्धिवर्णद्वयापेक्षत्वरूपमन्तरङ्गत्वस्य यणि सत्त्वेन बहिरङ्गत्वासमानाधिकरणान्तरङ्गत्वस्यैवासिद्धतानियामकत्वेन गुणे तत्समानाधिकरणस्यैव तत्त्वस्य सम्भवाद्गुणदृष्ट्या यणः सिद्धत्वेनास्यान्तरङ्गत्वस्य सर्वापेक्षया प्राबल्याद् यण्येव सत्त्वेन च गुणात् पूर्वं यणि रमाया रमायोरित्यनिष्टापत्तेस्तदवस्थत्वात्। न चोक्तभाष्यात् पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वं बहिरङ्गत्वं पदैकसम्बन्धिवर्णापेक्षत्वमन्तरङ्गत्वमित्यस्यैव स्वीकारेण प्रेद्ध इत्यादौ सामञ्जस्ये रमया रमयोरित्यादौ पदद्वयाभावाद् गुणस्योक्तबहिरङ्गत्वाभावेन नातिप्रसङ्ग इति वाच्यम्। प्रेद्ध इत्यादावपि 'गतिकारकोपपदानाम्' इति न्यायेन सुबुत्पत्तेः पूर्वमेव समासे गुणस्य पदद्वयसम्बन्धोत्वाद्युक्तबहिरङ्गत्वाभावेनोक्तभाष्यस्यासामञ्जस्यादुक्तान्तरङ्गत्वबहिरङ्गत्वे एव तत्तात्पर्यात् दोषतादवस्थ्यस्य सम्यक्त्वात्। किञ्च जि-धातोरचि तत आ-

चाग्किवन्तादिचन्तोपयलोपयोर्भ्यसि जभ्य इत्यत्र यकारोत्तराकारस्यैत्वे कर्त्तव्येऽल्लोपस्य स्थानिवत्त्वेनाकारव्यवधानात् लोपोद्देश्यस्यैत्वे स्वविधौ स्थानिवत्त्वाभावाच्चैत्वं न भवति इटि तु अदन्तात् परस्य भ्यसः सत्त्वेन प्रत्ययलोपमात्रेण स्थानिवद्भावेऽप्यकारान्तात् परत्वेन स्यादिति दोषस्य सत्त्वात्। यत्तु इटि कृते एभ्य इत्यादौ हलादिविभक्तिपरत्वाभावादिदो लोपो न स्यादित्युक्तं तन्न, 'हलि लोपः' इत्यत्र हलग्रहणाभावेऽपि 'अनाप्यकः' इत्यत्र 'अनटौसोरकः' इति न्यासे टयामोसि चानादेशेनान्यत्र टादौ लोप इति लोपेनापीष्टसिद्धेः। न चौकारादावपि लोपप्रवृत्त्याऽनिष्टापत्तिरिति वेत् 'दश्च' इदोऽय् पुंसि' इत्याद्यारम्भादौकारादौ तदप्रवृत्तेः॥ २॥ यत्त्वत्र 'अतसावेत्' इति न्यासं कृत्वा सुपि चेत्यतः सुपीत्यनुवर्त्त्य सुभिन्ने सुप्यदन्ताङ्गस्यैत्वमिति व्याख्यानेन रामेभ्य इत्यादाविष्टसिद्धिः। पर्युदासे व्यवायेष्वित्यादिनिर्देशात् प्रथमाया एकवचनस्यैव सोर्ग्रहणेन सप्तमीबहुवचने व्यावृत्तिं कुर्वन्ति। अजादावपि प्राप्तिमाशङ्क्य 'ओसि च' इति सूत्रारम्भादजादौ चेदोस्यैवेति नियमेन वारयन्ति। भिस्यैसादेशात् प्राक् प्राप्तावदन्ताङ्गत्वाभावेनैस्विधानस्यैव वैयर्थ्यात् विभक्तिस्थानिककार्यस्यान्तरङ्गत्वाद्वा प्रथममैसादेशे ततः सन्निपातपरिभाषया ओसि च इति नियमेन च दोषाभावः। भ्यामादौ सुपि चेत्यस्यारम्भादेव दीर्घः सप्तमीबहुवचनादावीष्टमेव। वस्तुतस्तु 'एत्' इत्येव सुवचम् प्रथमैकवचने एङ्ह्रस्वादित्यत्रत्यह्रस्वग्रहणसामर्थ्यान्नैत्वम्। हे लक्ष्मि हे वध्वित्यस्य ह्रस्वग्रहणफलत्वे तु 'इदुदेङः सम्बुद्धेः' इत्येव वदेदिति वदन्ति तन्न, भ्यामि यथान्यासे परत्वादेत्वमिष्टमिदानीं 'सुपि च' इत्यस्य निरवकाशत्वेनापवादत्वात् सर्वेषां रामेष्वित्यादावनवकाशस्यैत्वस्य भ्यसि दीर्घेण बाधापत्तेः। रामाणामित्यादावपि 'सन्निपात'-परिभाषाया अनित्यत्वेनैत्वापत्तेश्चेति॥३॥ परे त्वत्रैव 'स्मेत्' इति सुवचमित्याहुः। तेषामयमाशयः। सुपि चेत्यतः सुपीत्यनुवर्त्त्य सादौ भादौ च सुप्यैत्वमित्यर्थेन सारसायनभक्तः पचस्वेत्यादौ दोषाभावेन बहुवचनग्रहणाभावे रामो रामस्येत्यादावपि न दोषः। यतो मादिसाहचर्येणैकवचनभिन्नस्य सादेः, तादृशसादिसाहचर्येण द्विवचनभिन्नस्य भादेः परस्परसाहचर्येण ग्रहणादर्थाद् बहुवचन एव प्रवृत्तेर्दोषाभावेन महल्लाघवमिति। यत्तून्न्यासे पचध्वमित्यत्र सादिभादिप्रत्ययपरत्वाभावेन तद्व्यावर्त्तकसुपीत्यनुवृत्तिरपि मास्तु।

न च 'क्रियासमभिहारे लोट्, इति ध्वम्विषये स्वादेशे पचस्वेत्यादौ स्वादिबहुवचनस्य सत्त्वेनैत्वापत्तिरिति वाच्यम्। तिङतिरिक्तभादिसाहचर्यात् स्वादेरपि तिङतिरिक्तस्य तस्य द्विवचनभिन्नस्यैव सम्भवाद् भादेरपि तादृशस्यैव ग्रहणं स तु बहुवचनसुबेव तत्साहचर्याद्बहुवचनसुप एव सादेर्ग्रहणात् पचस्वेत्यत्र प्रथमैकवचने च द्विवचने भ्यामादौ च दोषाभावेन 'सुपि च' इत्यत्रापि 'ङेभ्याम्' इति न्यासेन सुपि ग्रहणं गतार्थमिति सुधियो विभावयन्तु। यत्तु 'सुट्तिथोः' इत्यादाविकाराद्युच्चारणेन न पुनरन्तरेणाचमिति उच्चैरुदात्त इति सूत्रस्थभाष्येण शास्त्राबोधिताज्व्यवहितहल्समुदायस्यासाधुत्वबोधनादेतादृशन्यासस्यैवासाधुत्वमित्युक्तं तन्न, न्यासकर्त्तुः सति लाघवे पाणिनिनैवमेव कुतो न कृत एतदभिप्रायेण पाणिन्युक्तस्य च शास्त्रबोधितत्वेन स्कोरित्यादितत्प्रयोगस्य सत्त्वेन चास्यापि सौत्रत्वेन साधुत्वात्, स्वाऽव्यवहितत्वसम्बन्धेनाज्विशिष्टहल्समुदायस्यासाधुत्वे एव पूर्वोक्तभाष्यादितात्पर्येण 'सुपि च 'बहुवचने' इति संहितापाठे चकारोत्तराकारस्योत्तरैकारवैशिष्ट्यस्य च सम्भवात् सकारभकाररूपहल्समुदायस्य साधुत्वाच्चेत्यलम् ॥ ४ ॥ अत्रैव 'झल्येत्' इत्येव न्यासोऽस्त्विति केचित्। झलादौ सुपीति तदर्थः। बहुवचनग्रहणाभावेऽपि सौ परे राम इत्यादौ न दोषः। 'एङ्ह्रस्वात्, इति सूत्रे ह्रस्वग्रहणसामर्थ्यात् अन्यथा हे रामेत्यत्रैत्वे कृते एङन्तत्वादेव लोपसिद्धौ किं तेन। ननु हे लक्ष्मि इत्यादौ तस्य चारितार्थ्यमिति वाच्यम्। 'इदेङ् सम्बुद्धेः, इति न्यासेनैव तत्सिद्धेः। न चैवमपि हे ज्ञानेत्यत्र सम्बुद्ध्यवयवलोपो न स्यात्। 'इदेङ् सम्बुद्धेः' ततो 'अम्' इति न्यासेनैव सिद्धेर्ह्रस्वग्रहणस्य वैयर्थ्येन तस्योक्तार्थज्ञापकता सुस्थैव। न चेङः पदान्तात् परो रस्तीति भाष्येण तादृशस्यानभिधानाच्च रामेत्यत्रैत्वं वारणात्। ये तु 'अकृतव्यूह' परिभाषया हे रामेत्यत्रैत्वं वारयन्ति तन्न, एतद्दृष्ट्या रुत्वादीनामसिद्धत्वेन निमित्तविनाशायोगात्। एतेन विसर्गे कृतेऽयोगवाहानामट्सूपदेशेन विसर्गस्य झल्त्वादेत्वप्रवृत्त्या 'द्विर्बद्धं सुबद्धम्' इति न्यायेन मूले रामस्येत्युक्तिरिति यदुक्तं तदप्यन्धपरम्परयैव, अन्यथा हरिः कर्त्ता हरिंस्मरतीत्यादौ यणादेशस्य दुर्वारत्वमेव स्यात्। रामस्येत्यत्रापि न दोषः 'टाङसि' इत्यनेन ङसः स्थानेऽकारादेरस्येत्यस्य विधानेनैत्वाप्रवृत्तेः। नन्वेवमप्यस्येत्यत्रानपवादस्य हलि लोपस्य दुर्लभत्वमिति

वाच्यम् 'हलि लोप' इत्यत्र हल्ग्रहणमपहाय 'अनाप्यक' इत्यत्रानसो-त्यधिकं निवेश्यानसीति पर्युदासादस्भिन्नासस्टश्टाद्यजादावेवानादे-शविधानेन 'अनटीसोरकः' इति न्यासेन चेष्टसिद्धेः । शेखरोक्तरामा-भ्यामित्यत्रापि न दोषः । सुपि चेत्येतत्स्थाने 'ङेभ्याम्' इति न्यासेनास्य च विशेषविहितत्वेनैत्वापवादत्वात् । न च ङेभ्यामिति न्यासे सुपि ग्रह-णाभावे 'घेर्ङिति' इत्यत्र सुपोत्यस्यासम्बन्धात् पट्वीत्यत्र गुणापत्तिरिति चेन्न स्त्रीप्रत्यये ओर्गुणाभावाय 'यूनस्तिः' इत्यतः प्राक् तद्धिताधिका-रेण स्त्रीप्रत्यये गुणाभावबोधनात् । अन्यथा स्त्रियाम् इत्यधिकारादग्रे तद्धिताधिकारेण 'प्राचां ष्फस्तद्धितः' इत्यत्र तद्धितग्रहणस्य 'यस्येति च' इत्यत्रेकारग्रहणस्य 'औङः श्याम्' इति वार्त्तिकस्य चाकरणरूपस्य महतो लाघवस्यापि सम्भवात् तद्वैयर्थ्यं स्पष्टमेव । यत्तूक्ततद्धितग्रहणस्य फलं न प्रातिपदिकसंज्ञाद्वारा ङीष्सिद्धिः षित्वादेव सिद्धेः । नापि 'य-स्येति च' इति लोपः सवर्णदीर्घेणापि रूपसिद्धेः । किन्त्वन्यतोऽप्यय-मिति ज्ञापनद्वारा यस्येति चेति लोपार्थं तेनासुरिशब्दादपि ष्फे आसु-रायणीत्यस्य सिद्धेः फलस्य सत्त्वेन कथं तद्धितग्रहणाकरणरूपं लाघव-मिति तन्न, तेन फड्विधानेऽपि डित्वाट्टिलोपेन डित्वफलस्याप्यन्यत्रैव स-त्त्वेनान्यतोऽपीति ज्ञापनेन चेष्टसिद्धेः । यत्तु गोकक्षशब्दाद् गर्गादि-त्वाद्यञि ततः क्रौड्यादित्वेन ष्यङि चापि प्रकृतसूत्रेण ष्फप्रत्यये चि-कीर्षिते भस्याढ इति पुम्वद्भावे गोकक्ष्यशब्दाद्यञन्तात् ष्फे गौकक्ष्या-यणीति सिद्ध्यति तद्धितसंज्ञाभावे पुम्वद्भावाप्राप्त्या यञन्तत्वाभावेन ष्फो न स्यादिति तदपि न, क्रौड्यादिषु गोकक्ष्यशब्दस्य पाठाभावेऽपि क्षत्यभावात् । चाप् तु 'षाद्यञश्चाब्वक्तव्यः' इत्यनेनैवोदीचाम्मते, प्राचां मते तु चापो बाधस्यापि विषये सर्वत्रग्रहणापकर्षात् ष्फे गौ-कक्ष्यायणीत्यस्य सिद्धेः । न च ङीबादीनां तद्धितत्वेऽतद्धित इति पर्युदासात् ङीबादेर्ङकारस्यैत्वानापत्तिः । चुटू, इत्यत्र 'चुटुङ्' इति न्यासेन तत्सिद्धेः । न च शुनीत्यादावतद्धित इति पर्युदासात् 'श्वयु-व'-इति सम्प्रसारणं न स्यात् । तदग्रे 'स्त्रीप्रत्यये च' इति न्यासेनेष्ट-सिद्धेः । यत्तु दण्डिनीत्यादौ 'ऋन्नेभ्यः' इति ङीपि 'नस्तद्धिते' इति टिलो-पापत्तिस्तदपि न । 'डाबुभाभ्याम्' इति सूत्रे डाप्रत्यये डित्वसाम-र्थ्यात् स्त्रीप्रत्यये तद्धितनिमित्तकटिलोपाभावज्ञापनात् । अलाबू कर्क-न्धूरित्यादावूङि 'ओर्गुणः' इत्यपि न, तत्र ङूङ् इति न्यासमाश्रित्य

गुणाभावज्ञापनात् । न च नद्या ग्रः नद्यस्तमिच्छतीति विग्रहे क्वचि तस्मिन् परे स्थानिवद्भावेन यकारे तद्धितत्वमाश्रित्य ‘ क्यच्व्योश्च ’ इति लोपापत्तिरिति वाच्यम् । नागेशीयसिद्धान्तेऽनल्विधाविति निषेधात् ङीप ईकारस्य तद्धितत्वेन तत्स्थानिकयस्य स्थानिवत्त्वेन तत्त्वेऽप्यपत्यार्थकत्वाभावाच्चेति तत्त्वम् ॥ ५ ॥

( २९ ) ‘ह्रस्वनद्यापो नुट्’ । अत्र ‘ नुड्नद्यापः ’ इत्येव सुवचम् ह्रस्वग्रहणं त्वनादेयमिति केचित् । अयमाशयः । अत्र योगद्वयं नुडि-त्येको नद्याबित्यपरः । अङ्गात् परस्यामो नुडिति प्रथमस्य, नद्यन्ता-दाबन्तादङ्गादामो नुडित्यपरस्यार्थः । तत्र प्रथमेनैव सिद्धे परयोगो नि-यमार्थो दीर्घात् परस्यामो नुट् चेन्नद्याप एव तावतैव नद्यापोऽतिरि-क्तादीर्घस्य न । न चैवमपि हलन्तेभ्यो लिहां दुहामित्यादौ तत्प्रवृत्त्याऽ तिप्रसङ्गः । ‘ षट् चतुर्भ्यश्च ’ इत्यस्य वैयर्थ्याद्धलन्ताच्चेद्भवति तर्हि षट्चतुर्भ्य एवेति नियमेन तत्सूत्रगृहीतातिरिक्तहलन्तेभ्योऽपि न । किञ्च ध्वंसनडुहाम्, कतिपयचतुराम्, युजि क्रुञ्चाम्, भ्रूणां चेत्यादि-निर्देशात् षडित्यत्र गृहीतातिरिक्तहलन्तेभ्यो व्यावृत्त्या ह्रस्वान्तेभ्य-स्त्विष्ट एवेति ह्रस्वग्रहणं सर्वथा निष्फलमिति । परे तु नुडिति पृथ-ग्योगे सति ङेरामित्यामि कृते परमप्याटं बाधित्वाऽन्तरङ्गत्वादामो नुट् स्यात् सामान्यापेक्षमन्तरङ्गं विशेषापेक्षं बहिरङ्गमित्यभ्युपगमात्। तथा च परत्वादाटा नुड्बाध्यत इति वक्ष्यमाणग्रन्थेनाटि कृते ‘सकृ-द्गति-न्यायात् नुट् नेति भाष्यग्रन्थेन च विरोधः स्यात् । यद्यपि नियम-सूत्राणां विधिमुखेन प्रवृत्तिरिति पक्षे ङेरामिति कृते तस्य नद्याप इत्यनेनैव बहिरङ्गे नुडागमे आड्नद्या इत्यनेन स बाध्यत इति न परत्वादित्यादिग्रन्थविरोधो नवोक्तभाष्यविरोधः । तथापि नियमसू-त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे परमप्याटं बाधित्वाऽन्तरङ्गत्वा-न्नुट् स्यादेव । किञ्च नद्यापः परस्यामो नुडेव स्यान्नान्यदित्येव नि-यमः कुतो न स्यात् तथा च गौर्यां रमायां सर्वासां सर्वस्यां चेत्यादि न सिद्ध्येत् । नुडागमस्य पंसि आट् याट् स्याडागमानां च ङिदन्तरे चारितार्थ्यात् । अपि च गौर्यामित्यादौ ङेरामि कृते नुटं बाधित्वा प्राप्तमाटं बाधितुं नदीग्रहणम् । एवं रमायां सर्वासां सर्वस्यां चेत्यादौ प्राप्तं याटं सुटं च बाधितुमाब्ग्रहणमिति नद्याप एतद्विध्यर्थमेव न नियमार्थं स्यात्, ततश्च विश्वपां वातप्रम्यामित्यादौ नुट् दुर्वारः

स्यात्। नद्यां मतुप्’ ‘भाषायां सदवसश्रुवः’ ‘सर्वासां प्रायदर्शनम्। ‘तस्यां प्रहरणम्’ इत्यादिनिर्देशेन विध्यर्थतापादनस्य नुडेवेति प्रागुक्त-नियमस्य च निवारणे तु ग्रन्थगौरवम्। अपि च आकारान्तादीकारान्तादूकारान्ताच्चेन्नवर्तति तर्हि नद्या एवेति नियमस्यापि सम्भवात् विश्वपां वातप्रम्यां खलप्वामित्यादौ नुडागमाभावेऽपि गवामित्यादौ नुट् स्यात्। न च ‘छन्दसि गोः पदान्ते’ इत्यारम्भाल्लोके गोशब्दात् परस्यामो नुड् न स्यादिति वाच्यम्। पदान्ते गोशब्दात् परस्यामो नुट् चेच्छन्दस्येवेति नियमेन लोके पदान्ते गोनामिति प्रयोगस्याभावेऽपि अपदान्ते तस्य दुर्वारत्वापत्तेः। रायां नावां गवामित्यादौ दुर्वारत्वाच्च। यदि तु दीर्घात् परस्यामो नुट् चेत्यादिनियमे गोः पदान्त इति सूत्रं विध्यर्थं भवेत्। आकारान्तादिभ्यः परस्यामो नुट् चेत्यादिनियमे तु नियमार्थं स्यात्। तत्र विधिनियमसम्भवे विधिरेव ज्यायानिति न्यायानुसन्धानेन दीर्घान्तात् परस्यामो नुट् चेदित्यादिनियम एव स्वीक्रियेतेत्युच्यते तथापि ग्रन्थगौरवमस्त्येव। तस्मादुक्तन्यासस्यातिक्लेशसाध्यत्वाद्यथाश्रुतमेव रुचिरमिति।

(३०) ‘नामि’ अत्र ‘आमि इति’ न्यास इति महाभाष्यकारः। अयमाशयः। कृताकृतप्रसङ्गित्वेन नित्यत्वात् परमपि नुटं बाधित्वा दीर्घे ह्रस्वग्रहणं व्यर्थं सद्भूतपूर्वह्रस्वान्तत्वमादाय नुडर्थम्, तेन रामाणां हरीणामित्यादीष्टसिद्धिः। न चाक्लृप्तमेतत्कल्पनापेक्षया क्लृप्तेन येन-नेति न्यायेन दीर्घापवादत्वान्नुट् स्यात् यद्वा दीर्घेऽप्यचः परस्मिन्निति पञ्चमीसमासमाश्रित्य स्थानिवत्त्वात् नुट् स्यात्। न च तथासत्यपवाद-त्वहानिः। उत्सर्गाप्राप्तावचरितार्थस्य आप्नोति दीर्घे स्थानिवद्भावेन नुटश्चारितार्थ्यात् तक्रन्यायेनैवापवादत्वसत्त्वादिति चेन्न, चारितार्थ्यं नाम सफलप्रवृत्तिस्तच्च दीर्घस्य दीर्घविधानेनास्तीति कृत्वा ह्रस्वान्तस्यैव दीर्घेऽपि स्यात्, तथा च नुडप्राप्तियोग्येऽचरितार्थस्य कृते नुटि यदागमन्यायेनाप्त्वाद्दीर्घस्यापि तक्रन्यायेन नुडपवादकत्वं तुल्यम्। एवं च परस्परमपवादापवादकत्वेन नित्यत्वस्यैव बलवत्त्वनियामकत्वं पूर्वोक्तं युक्तं तदपि न, प्रत्युत दीर्घ एव तक्रन्यायेन नुडपवादो न नुट् तदपवादः ‘नृच’ इति विकल्पपक्षे दीर्घाप्राप्तियोग्ये नुटश्चारितार्थ्यात्। न च दीर्घे जातेऽपि पञ्चमीसमासेन स्थानिवत्त्वात् नुट् प्रवर्त्ततेत्युभयोर्नित्यत्वमस्त्विति वाच्यम्। पञ्चमीसमासेऽपि स्थानिवत्त्वं पूर्वस्मादव्यवहितप-

वस्य विधावेवेति तस्याप्यप्रवृत्तेः । तच्चात्राव्यवधानं स्थानिवत्त्वसमानकालिकं न तु ततः प्राक्कालिकमत एव प्रत्ययैषिषन्निति युम्भावसिद्धिरितच्च विवरणे स्पष्टम् । एवं च हे गौरित्याद्यर्थमस्थानित्यत्वाश्रयणमप्रयोजकम् । तथा च ह्रस्वग्रहणस्य वैयर्थ्यमेव भूतपूर्वह्रस्वत्वाश्रयणे ज्ञापकता युक्तैवेति चेन्न । नृचेति दीर्घाभावे तस्य चारितार्थ्यात् । एकरूपावच्छिन्नार्थोद्विशेषरूपावच्छिन्नमुदाहरणं सामान्यरूपावच्छिन्नोद्देश्यताकयोगारम्भं न प्रयोजयतीत्यर्थकेन 'न ह्येकमुदाहरणं योगारम्भं प्रयोजयति इति न्यायेन 'नृनद्यापः' इत्येव वदेदित्युक्तम्, तस्यापि 'नृन्नद्यापः' इत्युचितमिति व्याख्यातारः । अन्यथा नृशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि तुकि नृदित्येतस्यापि 'यदागम-' न्यायेन नृशब्दत्वान्नुडापत्तेः, नद्याप् साहचर्यादजन्तस्यैव नृशब्दस्य ग्रहणमित्युक्तावपि नृचेति दीर्घपक्षे 'एकदेशविकृत-' न्यायेन स्थानिवद्भावेन वा नृशब्दत्वान्नुडापत्तेः । तक्रन्यायेन नुटो दीर्घेण बाधात् न दीर्घोत्तरं नुट्प्रवृत्तिरित्युक्तावपि नृशब्दस्य ऋशब्देन समासे दीर्घे ह्रस्वान्तत्वाभावेन न भवति साम्प्रतं पूर्वान्तत्वेन नृशब्दग्रहणेन ग्रहणात्-नुडापत्तेर्दुष्परिहरत्वात् । नुट् तु न दीर्घापवादस्तदभावपक्षे तत्प्रवृत्तेः । न च तिसृणामित्यत्र 'न तिसृ'-इति दीर्घनिषेधेन ह्रस्वग्रहणस्य चारितार्थ्यमिति वाच्यम् । 'षट्चतुर्भ्यः' इत्यत्रैव चेरित्यनुवृत्त्या नुट्सिद्धेः । न च एतीतीत् 'त्रयाणामीत् त्रीत् ततो ह्यामि तत्र 'अवयवावयव-' न्यायेन 'यदागम-' परिभाषया वा त्रिशब्दत्वान्नुट् स्यात् ह्रस्वग्रहणसत्त्वे तदन्तत्वाभावात् न भवति, एवं ह्रस्वग्रहणसत्त्वे त्रि-आमिति स्थिते त्रयादेशनुटोः प्राप्तयोः प्रतिपदोक्तत्वात् त्रयादेशे प्राप्नोति दीर्घे त्रयाणामिति भवति । त्रिशब्दानुवृत्तौ त्रयादेशे दीर्घे चापि स्थानिवत्त्वेन त्रिशब्दत्वान्नुम् प्रवर्तेतेति वाच्यम् । षट्चतुरसाहचर्येणावर्णान्तझलन्तभिन्नस्यैव तस्यात्र ग्रहणेनादोषात् । साहचर्येणागमरहितस्यापि ग्रहणस्य वक्तुं शक्यत्वाच्च । केचित् तु नृत्रिशब्दादौ फलभेदवारणाय 'स्त्रियां चतुरः' षण्णाद्यापः । 'नुर्वा' 'छन्दसि च' इति न्यासं कुर्वन्ति । द्वितीययोगे चतुर इत्यस्यानुवृत्तिर्भिन्नलिङ्गार्था । प्रथमयोगस्तु तक्रन्यायेनामि दीर्घबाधनार्थो नुटा दीर्घे बाधिते 'न तिसृचतसृ' इत्यपि न कर्त्तव्यं भवतीति लाघवम् । तृतीययोगो नृणामित्यत्र नुड्विकल्पार्थः । चतुर्थयोगे नुर्वेत्यतो वेत्य-

नुवृत्त्या ‘छन्दस्युभयथा’ इत्येतद्विहितस्य धातृशब्दान्नुटो विकल्पार्थं इति न कुत्रापि फलभेद इति वदन्ति । परन्त्वेतन्न्यासेऽपि ऋशब्देन नृशब्दस्य समासे दीर्घे तत आमि फलभेदस्य दुरुद्धरत्वात् । ह्रस्वग्रहणसत्त्वे ह्रस्वान्तत्वाभावान्नुटोऽप्राप्त्या यणि न्रामिति, ‘नृन्नद्याप्’ इति न्यासेऽपि ह्रस्व-ऋकारान्तत्वाभावान्नुटोऽप्रवृत्त्या न्रामित्येव । एतन्न्यासे पूर्वान्तत्वेन नृशब्दत्वान्नुड्विकल्पे न्राम् नृणामिति फलभेदः स्पष्ट एव । वस्तुतस्तु भाष्योक्तनृन्नद्याप इति न्यासस्य ‘ऋन्नद्याप’ इत्यत्र तात्पर्यम् । इदमत्रावधेयम्, भाष्ये नामीत्यत्रामीत्युक्त्वा षट्चतुरित्यत्र चरनुवर्त्यं छन्दस्युभयथेत्यत्र छान्दसत्वादुद्धृत्य नृचेत्यत्र न ह्येकमुदाहरणमित्याद्यभिहितम् । तस्य विशेषेणोक्तसकलदोषनिराकरणपरकत्वेन ‘ऋन्नद्याप’ इत्यत्रैव तात्पर्यम् । एवं च ऋत्नद्याप इति वादिमते तपरत्वेन तत्र च गोतोणिदितिवदनणग्रहणेऽपि तपरसूत्रप्रवृत्तिकल्पनात् । षडित्यत्र चिशब्दानुवृत्तिस्तत्र साहचर्याश्रयणमित्यादि गौरवमप्येतद्वादिनाम् । षट्चतुर्भ्य इत्यस्य गौणे प्रवृत्तिस्तु न भवति षडर्थगतसंख्याभिधायिन इत्यर्थात् । न चाङ्गाधिकारे पञ्चस्येत्यादिभाष्यस्यापि गृह्यमाणार्थगतसंख्याभिधायिनो विभक्तेरित्येवार्थः । अतदन्तसंज्ञापक्षे चेतद्भाष्यम् । इदं च भाष्यं नैकदेश्युक्ति । न ह्येकमित्युक्तौ ऋन्नद्याप इति न्यासे तात्पर्यावधारणेन तद्विरोधाभावात् । कृतदीर्घ-ऋकारे समस्तनृशब्देऽपि न फलभेदः । ह्रस्वग्रहणसत्त्वे ह्रस्वान्तत्वाभावात् ‘ऋन्नद्याप’ इति पक्षे तपरकरणेन व्यावृत्त्योभयपक्षे न्रामित्यस्यैव सम्भवात् । तस्मादामीति न्यासेन कश्चिद्दोषः । सनकारग्रहणं व्यर्थमिति चेदुत्तरार्थं तथापि तस्यावश्यकत्वात् । ‘नोपधायाः’ इति दीर्घो नामि यथा स्यात् । चर्मणां वर्मणामित्यादौ माभूदिति । वस्तुतस्तु अङ्गाधिकारे सूत्रद्वयस्य पाठे एतदेव प्रयोजनं यच्चर्मणामित्यादौ दीर्घो मा भवतु तद्यथा अङ्गाधिकारेणाङ्गसंज्ञानिमित्तके नामि दीर्घ इत्यर्थादङ्गसंज्ञानिमित्तकत्वं प्रत्ययस्यैवेति कृत्वा तस्य चार्थवत एव सम्भवाच्चर्मन्घटकनकारमादाय नामि चर्मणोऽकारस्य न दीर्घोऽर्थवत्त्वाभावात् । आमि न्यासे नोपधाया इत्यत्रापि आमीत्यस्यानुवृत्त्याऽऽमोऽङ्गसंज्ञानिमित्तकत्वेन नान्तस्य चर्मण उपधाया दीर्घः स्यादेव पुनरङ्गाधिकारे पाठो व्यर्थस्तस्मात् षट्संज्ञातिरिक्तनान्तस्य न दीर्घ इति कल्पनेन

चर्मणामित्यादौ दोषाभावेनोत्तरसूत्रेऽप्याम्यनुवृत्त्यैवेष्टसिद्धेः न्यासः सुवच एवेति ॥ १ ॥ अत्र सुपि चेत्येतदधिकारे 'नि' इत्येव सूत्रमस्तु दीर्घस्य सुपीत्यस्य च सम्बन्धेन नादौ सुप्यजन्ताङ्गस्य दीर्घ इत्यर्थेन सकलेष्टसिद्धिरिति केचित्। तन्न रमणीयम्। हरिणा भानुनेत्यादौ दीर्घापत्तेः। न च 'आङो नाऽस्त्रियाम्' इत्यत्र 'आङि नुगस्त्रियाम्' इति न्यासेन नुकोऽङ्गावयवत्वाददोष इति वाच्यम्। प्रकृष्टः कविः प्रकविस्तेन प्रकविणेत्यादौ नकारस्य विभक्तिस्थत्वाभावाण्णत्वानापत्तेः। प्रातिपदिकान्तत्वादेव तल्लाभमित्यपि न उत्तरपदं यत् प्रातिपदिकं तदन्तस्यैव नस्य णत्वमित्यर्थस्यैवेष्टत्वात् तदप्रवृत्तेः। न चैतदर्थम् 'आङि नुम् स्त्रियाम्' इत्येव सूत्रमस्तु तथा च प्रकविणेत्यादौ नुम्ग्रहणादेव तत्सिद्धिरिति चेत् प्रियास्तिस्रो यस्य तेन प्रियतिसेत्यत्र प्रियत्रि-आ इत्यवस्थायां नुम्तिस्रादेशयोः प्राप्तयोः परत्वान्नुमि 'निर्दिश्यमान-' परिभाषया तिस्रादेशानापत्तेर्निर्दिश्यमानस्य नुमा व्यवधानात्। सिद्धान्ते तु तिस्रादेशस्य कृताकृतप्रसङ्गित्वेन नित्यत्वान्न दोषः। न चैवं प्रियतिसृणि कुलायेत्यत्रापि नित्यत्वान्नुमः प्रवृत्त्या तिस्रादेशानुपपत्तिः। 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति' इति नुमोऽनित्यत्वात्। न चानुकरणत्रिशब्दाट्टाविभक्तौ त्रिणेत्यत्र विभक्तेर्हलादित्वाभावेन टाकारस्य 'षट्त्रि' इत्यनेनोदात्तत्वानापत्तिः। तत्र हलादेः प्रतिपदोक्तस्य ग्रहणेन सिद्धान्तेऽपि स्वरानुदयादिति वाच्यम्। एतद्विषये 'प्रतिपदोक्त-' परिभाषाया अप्रवृत्तेः। अन्यथा सर्वेषामित्यत्रैत्वस्य भ्यामित्यत्र चरितार्थस्य हलि लोपस्यास्मिन्नित्यत्र च प्रवृत्तिर्न स्यात्। न च अङ्गावयवत्वेऽपि त्रिणेत्यत्र न दोषः 'सावेकाच' इति स्वरप्रवृत्त्या तत्सिद्धिरिति चेन्न परमत्रिणा प्रियत्रिणेत्यत्र 'सावेकाच' इत्यस्याप्रवृत्त्या स्वरानापत्तेः। अत एव 'आङि नुमस्त्रियाम्' इत्यपि न न्यास उक्तदोषात्। यत्तु अङ्गनेत्यत्र 'अङ्गात् कल्याणे' इति विहितनाद्प्रत्यये दीर्घापत्तिस्तत्र विनञ्भ्यामिति विहिते नाञि अकारोच्चारणेन नकारादौ तद्धिते दीर्घाभावबोधनात् तद्धि नानेत्यत्र नकारोत्तराकारस्य वृद्धये तस्येदानीं दीर्घेणैव सिद्धतया वैयर्थ्यं स्पष्टमेव। सुनोतीत्यादौ तु न दोषः प्वादीनामिति ह्रस्वविधानसामर्थ्याद्विकरणे तदभावबोधनात्। सिनोग्राम इत्यादावपि न 'द्रुग्वो दीर्घश्च' इति कृत्यपि तदभावबोधनात् सुपीत्यस्य सम्बन्धेन

नादिसुप्त्वाभावेनादोषाच्च । तस्माद्वरिणेत्यादिदोष एवेति यथा-न्यासमेव रमणीयम् ॥ २ ॥ अत्रैव 'नुटि' इत्येव सुवचमित्यन्ये । नुटि परे अजन्ताङ्गस्य दीर्घ इति तदर्थः । तेषामयमाशयः । भृङ्ग इत्यत्र न दोष उणादेरव्युत्पन्नत्वात् । प्रत्यासत्त्या नुडवयवकप्रत्ययनिरूपिताङ्गस्यैव ग्रहणेन 'तस्मान्नुडचि' इत्यनेन नुग्विधानेन वाऽनश्व इत्यादावपि न दोषः । अस्यापत्यमिनं इत्यत्र नुडादिप्रत्ययस्य सत्त्वेऽपि तन्निरूपिताङ्गत्वाभावात् । यत्तु अयासन्तेति सूत्रबलेनोणादिषु क्वचिदव्युत्पत्तिपक्षस्यानाश्रयणेन भृङ्ग इत्यादौ दोषमुद्भावयन्ति तन्न क्वचिदनाश्रयणं स्वीकुर्वतामत्रैवानाश्रयणमत्र मानाभावादेकतरपक्षेणेत्यादिन्यायाश्रयणेन वा न्यासे लाघवानुरोधेन कल्पयितुं शक्यत्वात् । न चैवं 'ङमो ह्रस्वादचि' इति नुडापत्तिः । 'उत्तरपदत्वे' इति निषेधेनाश्व इत्यस्याजाद्युत्तरपदत्वाभावात् । न च नञा अ-शब्दस्य समासे नुटि अन इत्यस्माण्णिचि टिलोपे मित्रशब्देन समासे नलोपे नलोपस्यासिद्धत्वान्नञः परस्य मित्रेत्यस्य 'नञो जरमरमित्रमृताः' इति स्वरो न भवति नकारेण व्यवधानात् । नुकि तु नलोपस्यासिद्धत्वे 'यदागम-' न्यायेन नकारविशिष्टस्य नञाग्रहणेन तदापत्तिरिति चेत् नड्विधानेनानापत्तेः । न चैवं वारणेऽपि 'ङमो ह्रस्वादचि' इति विषये नुटि सन्नच्युत इत्यादौ 'नोपधायाः' इति दीर्घापत्तिरिति वाच्यम् । तेनापि ङमुट्करणेन दीर्घविधायकदृष्ट्या नुटोऽसिद्धत्वाच्च दीर्घानापत्तेः । यदपि अक्षण्वन्त इत्यक्षिशब्दान्मतुपि मकारस्य वकारे 'बहुलं छन्दसि' इति अनङादेशेऽनोनुडित्यनन्तात् परस्य मतुपो नुडागमेऽनोलोप इति लोपे 'अट्कुप्वाङ्' इति णत्वे अक्षण्वानिति तत्र नोपधाया इति दीर्घः स्यादिति तदपि न, अनो नुडित्यनेन नुग्विधानात् । न च नुकि सति तद्विशिष्टस्य पदत्वे 'नपदान्तस्य' इति निषेधाण्णत्वाभावः । एवं चेत् नुम्नुटोर्वा विधानेनादोषात् ॥३॥ केचित् तु नामीत्यत्र 'न' इति षष्ठ्यन्तं पृथक् पदम् । तथा चामि नान्तस्याङ्गाचो दीर्घ इति तदर्थः । आमीत्यस्याच्यन्वयेन येननाव्यवधानन्यायाद्वर्णैकव्यवधानेऽस्य प्रवृत्तिः । 'ह्रस्वनद्यापः' इत्यनेन नुक एव विधानं रामाणामित्यादौ सन्निपातपरिभाषयाऽनलोपस्य वारणम् । एवं च पञ्चानामित्यादावनेनैव दीर्घसिद्धौ 'नोपधायाः' इति सूत्राकरणं लाघवम् । रामाणामित्यादाव-

ह्रन्तत्वाभावादेत्वाप्राप्त्या 'बहुवचने झल्येत्' इत्यत्र झल्ग्रहणमपि मास्तु। वारीणामित्यादौ नुमि कृतेऽपि नान्तत्वादेव दीर्घसिद्धौ तदर्थं नुमचिरेति वार्त्तिके नुड्ग्रहणं च मास्तु। न च षण्णामित्यत्र नुटि 'प्रत्यये भाषायां नित्यम्' इत्यनेन षकारस्यानुनासिके णकारे नकारस्य ष्टुत्वेन णकारे तत्सिद्धिस्तदिदानीं न स्यादिति वाच्यम्। 'षट्चतुर्भ्यः' इत्यनेन नुट एव विधानात्। तत्र चतुर्ग्रहणसाहचर्येण षान्तस्यैव षषो ग्रहणं न तु 'ष्णान्ता षट्' इति संज्ञाभूतस्य तेन पञ्चानामित्यादौ नापत्तिः। एवं च 'न पदान्तात्' इत्यत्रानामित्यपि मास्तु। प्रत्ययावयवणकाररूपानुनासिके षकारस्यानुनासिकणकारेणैवेष्टसिद्धेः। न च चर्मणामित्यादौ दीर्घापत्तिरिति वाच्यम्। तद्वारणाय नामीत्यस्यानन्तरं 'षषः' इत्यपूर्वमेव सूत्रं कृत्वा तत्र नामीत्यस्य सम्बन्धे नामि नान्तस्य षषो दीर्घ इति तदर्थः। नामीत्यनेनैव सिद्धेऽयं योगो नियमार्थः। आम्विभक्त्युत्पत्तेः प्राग्नान्तस्याचो दीर्घश्चेत् षट् संज्ञकानामेवेति नियमेनैव व्यावृत्तेरुक्तान्यासेऽतीव-लाघवमिति वदन्ति तन्न 'षट्त्रिचतुर्भ्यो हलादिः' इत्यनेनाषड्भिर्दूयमानः। आषण्णाम् तिसृणामित्यादौ स्वरानापत्तेरेव सत्त्वात्। यदपि षट्संज्ञकत्रिचतुश्शब्दात् परो यो हल् ततः परस्य विभक्त्यवयवस्याच उदात्त इत्यर्थेन 'लक्षणप्रतिपदोक्त-' परिभाषया च हलादेर्भिमादेरेव ग्रहणेन चादोषस्तथापि 'नामान्यतरस्याम्' मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात् परो नामुदात्तो वा चेतन्तो सुमतीनामित्यत्र नाम आनुपूर्व्याः सत्त्वेनार्थवत्परिभाषाप्रवृत्त्याऽर्थवतो नाम्नो ग्रहणेन प्रकृते तादृशस्यासम्भवेन दोषाभावेऽपि व्यापारस्य बहुतरस्य च सत्त्वेन गौरवाच्च यथान्यासमेव सुन्दरमिति ॥ ४ ॥ अत्रैव 'विति' इत्यपि केचित्। उकार इद्यस्य तद्वित्तस्मिन्नित्यजन्ताङ्गस्य दीर्घ इत्यर्थः। अङ्गाधिकारादङ्गसंज्ञानिमित्तके वितीत्यर्थः। तस्य च प्रत्ययस्यैव सत्त्वेन विति धातौ प्रातिपदिके च हे देवदत्त दीव्यति यत्र भवानित्यादौ दीव्यत्यादिषु न दोषः। राम इत्यादौ सौ दीर्घस्तु न प्रत्यय इत्यादि निर्देशात् सुस्थाने सेर्विधानाच्च पथिमथीत्यादिनाऽकारविधानज्ञापनाद्वा। एवमोकारोकारांशेऽपि न 'पतिः समास' भिन्न उः' इत्यादिनिर्देशात्। ऋकारांशेऽनङादिना बाधात्। 'अर्थवत्' 'अनद्यतने' इत्यादिनिर्देशैस्तद्विति विति तदभावस्य ज्ञापनाद-

भवानित्यादावपि न दोषः। यत्तु मतुबित्यत्र मतिप्विधानेनापि दोषाभाव इति तन्न 'उगिदचाम्' इति नुमनापत्तेः। मत्विधाने तु न कश्चिद्दोषः। तुडित्यत्र तिट् सुडित्यत्र सिट्करणेनापि 'अनद्यतने' सर्वेषाम् इत्यादौ च दीर्घाभावः। यत्तु एवं सति अनद्यतनशब्दात् क्विपि क्तप्रत्ययेऽनद्यतनित्खेत्यत्र सर्वेषां सुत इत्यत्र 'षष्ठ्याश्राक्रोशे' इत्यलुकि स इवाचर्य सर्वेषां सुतित्वेत्यादौ च 'उदितो वा' इति वैकल्पिकइडनापत्तिस्तन्न, धेङ्ङितीति सूत्रोक्तरीत्या प्रातिपदिकाश्रितानुबन्धप्रयुक्तात्मनेपदादिकार्याभावस्य बोधनात्। कृति णमुलादौ गुणवृद्ध्यादिना बाधात् न दोष इति वदन्ति। कृतवानित्यादौ क्तवत्वादिप्रत्ययेऽपि 'निष्ठायामण्यदर्थे' इति दीर्घविधायकेन सामान्यतो ज्ञापनेन कृदिति न दीर्घ इति ज्ञापनेन वारणाच्च न कश्चिद्दोषः। यदपि भावकर्मभिन्नार्थके चेत् क्षिय एवेति नियमार्थं तदिति कर्मार्थकादौ तस्मिन् कृतवानित्यादौ दोषः स्यादेवेत्युक्तं तदपि न वितः क्तवत्वादेः कर्मार्थकत्वाभावात्। सूत्रनिर्देशमवलम्ब्य सूत्राक्षरस्य विघटनमप्यनुचितमित्युच्यते तर्हि यथान्यासमेव सम्यगिति परे ॥ ५ ॥

( ३१ ) 'जराया जरसन्यतरस्याम्' अत्र प्रतिपत्तिलाघवाय 'जराया असुङ्' न कृत इति शेखरग्रन्थः। असुङि ङकारस्येत्संज्ञा ङिच्चेतदुभयप्रवृत्त्या प्रतिपत्तिगौरवमिति। अत्र केचित् तथा सति 'जराशब्दात् तत् करोति' इति णिचि णाविष्ठवदिति टिलोपे ततः क्विपि णिलोपे चैकदेशविकृतस्यानन्यतया जरित्यस्य जराशब्दत्वादसुङि सति ङिच्चेत्यस्य प्रवृत्त्या जसौ जस इति रूपापत्तेरिष्यते त्वत्रापि जरसौ जरस इति। न च णिलोपस्य स्थानिवद्भावादिभक्तिपरत्वाभावेन जरसावित्यादि न सिद्ध्यतीति वाच्यम्। 'क्वौ लुप्तं न स्थानिवत्' इति निषेधेन व्यवधानाभावात्। यद्यपि क्वौलुप्तमिति क्वाचित्कं तथाऽपीह तदाश्रयणे जरसिति गुर्वादेशकरणमेव मानमित्यवधेयमित्याहुः। तन्न आबन्तप्रकृतिकणिचः क्विपोऽनभिधानेनोक्तरूपस्यैवालाभेन फलभेदस्य सुतरामलाभात्। अत्र मानं तु 'आरगुदीचाम्' इत्यत्र रकासिद्ध आकारोच्चारणमन्यतो विधानार्थं तेन पाण्डस्य जडस्य चापत्यं पाण्डारो जाडार इत्यस्य सिद्धिरित्युक्तिरेवान्यथा गोधाशब्दादपि णिचि क्विपि टिलोपे गोधार इत्यतदर्थमाकारोच्चारणस्य सफलत्वे उक्तिर्व्याहतैव स्यात्। यदपि जराशब्दस्य क्रुशब्देन

समासे गुणे जरसित्यत्र पूर्वान्तवत्त्वेनैकदेशविकृतन्यायेन वा जराशब्द-
त्वाज्जरसादेशे जरसौ असुडि रेफोत्तराकारेण दीर्घे जरासावित्या-
पत्तिस्तदपि न पररूपेणेष्टरूपस्य सिद्धेः। अकारोच्चारणसामर्थ्यात्
पररूपं नेति तु वक्तुमशक्यमावन्तस्य जराशब्दस्य जरसावित्यादाव-
सुडि फलभेदस्य सत्त्वात्। वस्तुतस्तु जरामततीति जरात् ततो णिचि
क्विपि टिलोपे रेफस्यासुडि जसौ यथान्यासे जरसाविति फलभेदस्य
सत्त्वेन न्यासे लक्ष्यदोषोऽपि अत्र टिलोपस्याज्झलादेशत्वेन णिलोपस्य
कौलुप्तन्यायेन स्थानिवद्भावाप्रवृत्त्या दोषो दुरुद्धर एवेति परे।

(१२) सुडनपुंसकस्य। अत्र 'टूसु' इत्येवास्तु मास्तु नपुंसक-
ग्रहणम्। न च लोम्नी साम्नी चर्मणी इत्यादौ औ औङित्यादेः सुट्-
त्वात् सर्वनामस्थानत्वेन तस्मिन्नभत्वादल्लोपाभावेन दीर्घापत्तिरिति
चेन्न औङस्थानिकस्यादेशे साम्प्रतं यस्येति लोपाप्राप्त्या तन्निषेधकस्य
'औङः श्याम्' इति वचनस्य वैयर्थ्येन श्यादेशस्य सर्वनामस्थानसंज्ञानि-
षेधपरत्वेनेष्टसिद्धेः। वस्तुतस्तु 'सुट्शि' इत्येवास्तु। 'शि सर्वनामस्थान-
म्' इत्यस्याकरणमपि लाघवम्। सर्वे ज्ञानानीत्यादौ सुट्त्वेन जसो-
जातसंज्ञायाः स्थानिवत्त्वेन शिग्रहणाद्वा सर्वनामस्थानत्वेन निर्वा-
हेऽपि साम्नी इत्यादौ दीर्घः। अतिजरसम् ज्ञानमित्यादौ च 'नपुं-
सकस्य झलचः' इति नुम्। बहुपुमित्यत्र। 'पुंसोऽसुङ्' इत्यसुङ्
दुर्वार इत्यपि न औङः सर्वनामस्थानत्वेन तस्मिन् भत्वाभावात् 'य-
स्येति' लोपाप्राप्त्यानायुक्त्या तन्निषेधकस्य सर्वथा वैयर्थ्येन नपुं
सके सुटः सर्वनामस्थानसंज्ञा नभवतीति ज्ञापनेनैव वारणात्।
शिग्रहणस्य तु न वैयर्थ्यम् जसः शीज्ञापनेनाप्राप्तायाः शसः शेः सर्वथा
प्राप्तायाः संज्ञाया उभयत्र विधानेन चारितार्थ्यात्। अतिजरसम्-
ज्ञानमित्यादौ। 'सन्निपात'-परिभाषया तु न वारणं कुरुचरीत्या-
दौ दोषाज्ज्ञाप्यविरोधाच्चेत्यलम् ॥ १ ॥ अन्ये तु नपुंसकग्रहणाभावे
लोम्नी इत्यादौ दीर्घापत्तिमाशङ्क्य शि सर्वनामस्थानम्' इत्यस्य
नपुंसके चेदस्यैवेति नियमार्थत्वेन वारयन्ति तन्न शस आदेशस्य
तस्याप्राप्ततत्संज्ञाविधानार्थं तस्य सार्थक्यात्। शिभिन्नस्य सुटः सर्व
नामस्थानसंज्ञेत्यर्थकेन 'सुडशी' इति न्यासेनोक्तदोषस्य वारणेऽपि
स्त्रियां सर्वे इत्यादौ यस्येति चेत्यल्लोपापत्तेः। 'सन्निपात'-परिभा-
षयाऽल्लोपवारणे तु कुरुचरीत्युक्तदोषस्य तादवस्थ्यात्। 'औङः

श्याम्, इति वार्त्तिके औङ्ग्रहणमकृत्वा श्याम्प्रतिषेध इत्यर्थेन सर्वे इत्यादौ वारणे तु ज्ञानमित्यादौ 'नपुंसकस्य झलचः, इति नुमः, बहुपुमित्यादावसुङश्चापत्तिर्दुर्वारैव । यत् तु धनं वनमित्यादौ पराद्विवज्ञावेन प्रत्ययत्वात् 'एकदेशविकृत'-न्यायेन नकारान्ते प्रकृतित्वात् 'सर्वनामस्थाने, इति दीर्घापत्तिरिति तन्न, एकादेशस्य स्थानिवत्त्वेन नान्ताङ्गत्वाभावात् । दीर्घे तन्निषेधस्तु न स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः ॥ २ ॥ परे तु अत्र नपुंसकरहितन्यासे ज्ञाने इत्यादौ सर्वनामस्थानसंज्ञापत्त्या 'नपुंसकस्य झलचः' इति नुम् तु न 'शि-सर्वनामस्थानम्'इत्यस्य नपुंसकस्य चेत् शावेवेति नियमार्थत्वेन वारणात् । न च असूर्यानिकश्यादेशस्याप्राप्तसंज्ञाविधानार्थत्वेन तस्य चारितार्थ्यान्नियमत्वायोगात् ज्ञाने इत्यादौ दूषणस्य तादवस्थ्यमिति वाच्यम् । सुडशि, इति न्यासेन सर्वनामस्थाननिमित्तकनुमः परिहृतत्वात् । न च सर्वे इत्यादौ सर्वशब्दात् औङौटोः श्यादेशे सुडशि इति न्यासे सर्वनामस्थानत्वाभावात् भसंज्ञापत्त्या 'यस्येति च' इत्यल्लोपापत्तिः । औङः श्याम् इत्यत्रौङ्ग्रहणं परित्यज्य श्याम्प्रतिषेधः' इत्यनेन लोपाभावस्य सुलभत्वात् । न चातिजरसं पश्येत्यत्र नुमापत्तिः । नपुंसकस्य झलचः शौ,इति न्यासेन परिहारात् । न चैवं गौरवापत्तिः 'शि सर्वनामस्थानम्' इति सूत्रस्याकर्त्तव्यत्वेन लाघवात् । न चैवं ज्ञानानीत्यादौ दीर्घो न स्यात् 'सर्वनामस्थाने चासम्बुद्धौ शौ, इति न्यासेन दीर्घस्य सुलभत्वात् । प्रत्यञ्चीत्यादौ नुम् तु 'उगिदचां सर्वनामस्थानेऽधातोः शौ' इति न्यासेन सुलभः । गौरवमपि न अस्मादेव शावित्यस्यानुवृत्त्या सिद्धौ 'नपुंसकस्य झलचः' इति सूत्रे शावित्यस्याकर्त्तव्यत्वेन लाघवात् । न च सुपन्थानीत्यत्र भसंज्ञया टेर्लोपापत्तिरिति वाच्यम् । टेर्लोपे कृते 'थान्थः' इत्यत्र 'थोन्थाः' इति न्यासेनापत्तिविरहात् सर्वनामस्थानपरत्वाभावेन सूत्रस्यैवाप्रवृत्तिरित्यपि न सूत्रे शावित्यस्य पाठेन प्रवृत्तेरिति वदन्ति । वस्तुतस्तु अनपुंसकग्रहणं प्रसज्यप्रतिषेधेऽपि नञ्समासज्ञापकमिति कैयटोक्त्या तदर्थं तस्यावश्यकत्वादिति ।

(३३) 'अल्लोपोऽनः' अत्र 'अनो नश्' इत्येवास्तु शित्त्वात् सर्वादेशत्वेनेष्टसिद्धेः । नकारेऽकारश्चोच्चारणार्थः । उत्तरत्र सम्बन्धार्थं लोपग्रहणस्य तु नावश्यकता, 'उद ईत्' इत्यादौ तत्सम्बन्धस्य फलाभावेन

यथा न्यासे च 'लोपो यि' 'घुसोरेद्धौ' इत्यतो मण्डूकानुवृत्तेः सत्त्वात्। न च प्रियाष्ट्न इत्यादावल्लोपे ष्टुत्वे कर्त्तव्ये स्थानिवद्भावप्रतिबन्धकस्य 'पूर्वत्रासिद्धीये न स्थानिवत्' इत्यस्यापि प्रतिबन्धकेन 'तस्य दोषः संयोग' इत्यादि वार्त्तिकेन स्थानिवद्भावात् कार्यकालपक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाच्च ष्टुत्वं न भवति। नशादेशे स्वज्झलादेशत्वेन स्थानिवत्त्वाभावात् ष्टुत्वं स्यादिति वाच्यम्। प्रियाष्टन्-शब्दे परे तु ष्णान्तेत्यादिनिर्देशपर्यालोचनेन तदनभिधानस्यैव लाभान्न्यासः सुवच इति चेन्न प्राणितीति प्राण् ततः क्वसादिप्रत्यये प्राणः प्राणीत्यादौ 'अनितेः' इति णत्वस्यासिद्धत्वेनादित्यत्र तपरकरणादल्लोपो न भवतीदानीं तस्यासत्त्वेनादेशाप्रवृत्तेरनिष्टापत्तेः। न च सवर्णदीर्घेऽन एवासत्त्वेन नोक्तदोषः 'वार्ण'-परिभाषया दीर्घात् प्रागेव लोपप्रवृत्त्याऽपि तुल्यत्वात्। आङ्गवार्णयोर्युगपत्प्रवृत्तावेव तत्परिभाषाप्रवृत्तेः स्वौकारादनुनासिकस्य क्वीति दीर्घे सवर्णदीर्घात् प्रागप्यनोऽभावाच्च न फलभेदः। वस्तुतस्तु, एकदेशविकृतन्यायेनान्त्वात् न्यासे स्यादेवादेशः। सिद्धान्ते तपरकरणं तद्व्यावर्त्तकमिति भेदस्य सत्त्वाद्यथाश्रुतमेव रमणीयमिति॥

( ३४ ) 'न लोपः प्रातिपदिकान्तस्य, नन्वत्र 'न लोपोऽतिङः' इत्येवास्तु पदस्येत्यस्याधिकारस्तथा चायमर्थः। तिङन्ततदादिभिन्नं यत्पदं तदन्तस्य नस्य लोपः स्यादिति। अस्मिन् न्यासेऽहन्नित्यत्र तिङन्ततदादित्वेन दोषाभावात् 'अर्थवत्' सूत्रेऽधातुग्रहणं नलोपविधायके प्रातिपदिकग्रहणं च नकर्तव्यं भवतीति महल्लाघवम्। न च पर्युदासन्यायेन तिङन्ततदादिभिन्नधातुविहितप्रत्ययान्तस्यैव नान्तस्य ग्रहणम् तथा च दण्डिमानित्यत्र न लोपो न स्यादिति वाच्यम्। प्रसज्यप्रतिषेधाश्रयणाद्भाष्यप्रामाण्याच्च दोषाभावात्। तथा हि 'टाङसि, इति सूत्रे इनातौ प्रत्याख्याय न-अदादेशं च विधाय नादेशे परे 'बहुवचने झल्येत्, इत्यत्र एदिति योगविभागेनैत्वं साधितं तत 'आपः सम्बुद्धौ' आप एकारः स्यात् सम्बुद्धौ तत 'आङि' ओसि च, अनेनेत्यत्र हलि लोपमाशङ्क्यानादेशस्य नकारे परे विशेषविधानं कृतम्। तथा हि नकारे आपि च परेऽन् स्यादिति सूत्रार्थः। सूत्रेऽन इति लुप्तनकारकस्य नान्तस्य नपुंसकनिर्देशः कृतो न्यासेन पूर्वोक्तन्यायाश्रयणे नलोपाप्राप्त्या 'अनाप्यकः' इति निर्देशासङ्गतिः

स्पष्टैव । ननु रामानित्यत्र नलोपापत्तिः 'तस्माच्छसो नः' इति सूत्रसामर्थ्यान्नेति तु वक्तुमशक्यं निर्विसर्गकरूपसाधनार्थं तस्यावश्यकत्वादिति चेन्न सलोपविधानेनाकारकरणेन वा निर्विसर्गस्य सिद्धत्वात् । न चानुकरणे 'अनुकरणं प्रकृतिवन्न' इति पक्षे सम्बुद्धौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन 'न ङिसम्बुद्ध्योः' इति निषेधे श्रवणार्थं तत्सार्थक्यमिति वाच्यम् । तथा सति 'तस्माच्छसः' इत्यनेन न्स इत्यस्य विधानेन संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाप्राप्त्या दोषाभावात् । ननु सर्वस्मिन्नित्यत्र नलोपापत्तिः । अचोच्चारणसामर्थ्यादिति तु वक्तुमशक्यं सर्वस्मिन् शेते सर्वस्मिन् शयस्तस्य सम्बोधने हे सर्वस्मिन् शयेत्यत्र नलोपस्यासिद्धत्वान्नकारशकारयोः संयोगसंज्ञायां 'संयोगे गुरु' इति गुरुसंज्ञया 'गुरोरनृतः' इति प्लुतस्यैव फलत्वात् । न च 'इकोऽचि विभक्तौ' इति सूत्रभाष्ये अचि किं वारिभ्यामित्युक्तम् । अज्ग्रहणाभावे हलादावपि नुम् स्यादित्युक्त्वा नलोपेनादोषं विभाव्याचोति सामर्थ्यात् 'न लुमताङ्गस्य' इत्यस्यानित्यतोक्ता साऽसङ्गता स्यात् । वारिषु शेते वारिशयस्तस्य सम्बोधने हे वारिशय इत्यत्र नलोपे तस्यासिद्धत्वात् पूर्ववद्गुरुसंज्ञायामुक्तफलस्य सत्त्वात् तस्माद्भाष्यात् नकारपूर्ववर्णोद्देश्यकसंज्ञाविधौ नलोपो नासिद्ध इति ज्ञापनेन प्रकृते दोषाभावात् तत्राप्युच्चारणसामर्थ्यादेव दोषविरहेण सुवच इति वाच्यम् । 'शयवासवासि' इति सूत्रे हलदन्तादित्यस्यानुवृत्तेर्वारिषु शयः इति रूपस्यैवाभावेन तन्मूलकज्ञापनस्य सुतरामभावात् । एवमपि वारिचर इत्यत्र 'तत्पुरुषे कृति' इत्यनेनालुकि पूर्ववद् 'गुरोरनृत' इति प्लुतरूपफलस्य सत्त्वाद्भाष्यविरोधस्य तादवस्थ्येन ज्ञापनस्य सुष्ठुतरत्वेन प्लुतरूपफलासत्त्वान्नकारोच्चारणसामर्थ्येन नलोपाभावस्य वक्तुं शक्यत्वात् । 'स्मात् स्मिन्' इति न्यासेन तकारस्य संयोगान्तलोपेन निवृत्तिस्तस्यासिद्धत्वान्नलोपाप्राप्तिश्च । वस्तुतस्तु 'न लोपः सुप्स्वर' इति सूत्रभाष्ये संज्ञापदेन घिसंज्ञाया एव ग्रहणफलस्य दण्डिदत्त इत्यादौ प्रदर्शनेन संयोगसंज्ञां प्रति नलोपस्यासिद्धत्वाभावेन पूर्वोक्तफलस्य भाष्यप्रामाण्येन कल्पितार्थस्य च हेयत्वाच्चोक्तन्यासे दोषाभाव इति वाच्यम् । यजेरन् पचेरन् अनयोः 'आख्यातमाख्यातेन' इत्यादिना समासे 'विनाऽपि प्रत्ययम्' इति पूर्वपदस्य लोपे पचेरा इत्यत्र सिद्धान्ते नलोपो जायते उक्तन्यासे तिङन्ततदादि-

भिन्नत्वाभावान्नलोपो न स्यादिति दूषणस्य सत्त्वात् यथान्यासमेव रम-णीयमिति । यत् तु आनुमानिकस्थान्यादेशभावेन तिङन्ततदादिभिन्नत्वस्यातिदेशेन सुलभतयोक्तन्यासेऽपि स्यादेव नलोप इति तन्न तस्य शास्त्रस्यैकपदशक्यत्वरूपशास्त्रीयत्वाभावात् शास्त्रीयधर्मस्यैवातिदेशात् । मम तु तिङन्ततदादित्वस्य तत्त्वेनातिदेशतस्तल्लाभसम्भवात् । यदपि नायक इति भाष्योदाहरणेनाभावकार्येऽतिदेशाप्रवृत्त्या नलोपाभावेऽतिदेशाप्रवृत्तिरिति तदपि न भाष्येण शास्त्रप्रवृत्तिप्रतिबन्धकस्थानिवद्भावाभावस्यैव बोधनात् प्रकृते 'अनचि च' इत्यादिवत्तिङ्शास्त्रप्रवृत्तिप्रयोजकत्वस्यैव स्थानिवद्भावे सत्त्वेनादोषादित्यलं विस्तरेण ।

( ३५ ) 'दीर्घाज्जसि च' अत्र केश्चित् 'दीर्घाज्जि च' इति विन्यस्य तदादिविधिना जादौ प्रत्यये इचि चेति व्याख्यातम् । तत्राप्यनुबन्धविनिर्मुक्तस्यैव प्रत्ययस्य लक्ष्ये उपस्थित्या जादित्वस्यालाभमाशङ्क्य सूत्रसामर्थ्यादौपदेशिकजादित्वाश्रयणेन समाहितं । तन्न, यत्किञ्चिन्मात्रालाघवेन सूत्रसामर्थ्यकल्पनस्यैव गुरुत्वात् ।

( ३६ ) 'जसि च' ननु 'जसि च' 'जुसि च' इत्येतत्सूत्रद्वयं विहाय 'जुसि च' इत्येतत्स्थाने 'जिति च, इति न्यासं कृत्वाऽचीत्यनुवर्त्य 'इको गुणवृद्धी, इति परिभाषयेक्पदमुपस्थाप्याजादौ जिति इगन्ताङ्गस्य गुणो भवतीत्यर्थेन हरय इत्यादिसिद्धेर्गुरुभूतं मूलोक्तं न युक्तमेव । एतेन ह्रस्वस्यानुवृत्तौ अबिभयुरिति दीर्घान्ते गुणो न स्यादचीत्यस्याननुवृत्त्या जाग्रयुरित्यत्र 'यदागम' न्यायेन विशिष्टे जित्त्वाद्गुणः स्यादित्यपास्तम् । न च दीर्घान्ते पप्यो गौर्य इत्यादौ गुणेनानिष्टापत्तिरिति वाच्यम् । 'दीर्घाज्जसि च' इत्यत्र जसि ग्रहणसामर्थ्याज्जसि दीर्घस्य गुणो नेति ज्ञापनेनादोषात् न च गौरीयतेरेवं हूङ्यतेः क्विपि अल्लोपयलोपयोर्जसि अल्लोपस्य स्थानिवत्त्वेन गुणाप्राप्त्या प्राप्तप्रथमयोरिति दीर्घबाधनेन चारितार्थ्यमत्र च न स्थानिवद्भावः पूर्वसम्बन्धिन्येव विधौ तदुक्तेरिति चेन्न, गौर्य इत्यादौ पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वेन प्रातिपदिकसंज्ञाकाल एव स्थानिद्भावेन 'एरनेकाचः' इति हुह इत्यादौ 'ओः सुपि' इति यण एव सत्त्वात् । न चोक्तोदाहरणयोर्यणि यङोरियङवादत्वात् 'एरनेकाचः' इति ततोऽप्यन्तरङ्गत्वात् 'इको यणचि ' इति ततोऽप्यपवादत्वात् ' प्रथमयोः ' इति ततोऽपि परत्वा-

दियङिति चक्रकमिति चेत् 'इको यणचि' इति यणं बाधित्वा 'कार्णादा-ङ्गम्' इति न्यायेन 'एरनेकाचः' 'घोः सुपि' इत्यनयोः प्रवृत्तेः। यत् तु कीर्त्तिचुञ्चुरित्यादौ चकारस्येत्संज्ञापरित्राणाय 'चुटू' इत्यनेन लुप्तनिर्दिष्टजकारस्य सत्त्वेन पटुजातीय इत्यत्र सिद्धान्ते फलाभावेन जकारस्य नेत्संज्ञा साम्प्रतं गुणस्यैव फलस्य सत्त्वेन चेत् संज्ञया गुणापत्तिरिति तदपि न उभयत्रापि लुप्तनिर्दिष्टान्तस्थयस्यैव सत्त्वेन तदप्राप्तेः। यत् तु यङ्लुगन्ताज्जूधातोर्लङि झौ 'सिजभ्यस्त' इति जुसि 'जुसि च' इति उत्तरखण्डोकारस्य गुणेऽजोभवुरिति उक्तन्यासे 'ञिति च' इति गुणस्यानुबन्धनिर्दिष्टत्वात् 'तिपा शपा' इति न्यायेन गुणनिषेधादुक्तप्रयोगो न स्यादिति तन्न तस्य न्यायस्यानित्यत्वेनात्राप्रवृत्तेरित्यलम् ।

(३७) शेषो घ्यसखि, 'शेषो घ्यसखि' 'पतिः समास एव' इति सूत्रद्वयं न कार्यम् । उभयोः स्थाने 'शेषो घ्यसखिपती' इत्येवास्तु अनदिसंज्ञकौ ह्रस्वौ याविदुतौ तदन्तं सखिपतिवर्जं घिसंज्ञकमित्यर्थः। सुसखिभूपति-इत्यादीनां सखिपतिरूपत्वाभावात् पर्युदासाप्राप्तेर्घिसंज्ञा स्यात् केवलस्य तु पर्युदासेन सख्या पत्येत्यादौ सा नेति सकलेष्टसिद्धिरिति केचित्। तन्न गवां पतिरित्यादौ समुदायस्य पतिरूपत्वाभावात् संज्ञया घित्वप्रयुक्तं कार्यं स्यात्। यथान्यासे नियमेन वाक्ये तदप्राप्तेरिति यदपि तदपि न रमणीयम् । घित्वप्रयुक्तकार्यविधायके 'घेर्ङिति' इत्यादौ प्रत्यासत्त्या घिसंज्ञकवृत्त्यङ्गसंज्ञानिमित्तकविभक्तौ तद्विधानेनात्र संज्ञासत्त्वेऽपि तत्प्रयुक्तगुणादिकार्यस्याप्राप्तेः। किन्तु समुदायस्य बहुव्रपूर्वकस्य पतिशब्दस्य पतिरूपत्वाभावेन घिसंज्ञा स्यात् ततश्च सुसखिनेत्यादिवद्बहुपतिनेत्यादि प्रसज्येत इष्यते तु बहुपत्येत्यादि। 'सखिपती समासे एव, इति केचित् तदपि न बहुपत्येत्यादिवद्बहुसख्येत्याद्यापत्तेः। इष्यते तु बहुसखिनेत्यादीत्यलम्।

( ३८ ) घेर्ङिति, अत्र 'घेर्ङि' इत्येव सूत्रमस्तु 'सुपि च' इत्यतः सुपीत्यनुवर्त्तते तच्च विशेष्यं ङीतीति विशेषणं 'यस्मिन् विधिः' इति परिभाषया ङादौ सुपि गुणो भवतीत्यर्थः। न च प्रबाह्वेत्यादौ प्रबाहुशब्दात् तृतीयैकवचनं तत्स्थाने 'आङ् याजयारणामुपसंख्यानम्' इति वार्त्तिकेनाङादेशोऽत्र ङादित्वाभावाद्गुणो न स्यादिति वाच्यम्। ङादेशेनैव तत्सिद्धेः । न च सिद्धान्ते 'आण्नद्याः' इत्यत्र 'घेर्ङिति' इत्यस्मात् ङितीत्यस्यानुवृत्त्या 'उभयनिर्देशे पञ्चमीनिर्देशो

बलीयान्' इति परिभाषया सप्तम्या षष्ठीं परिकल्प्य नद्यन्तान्ङिता-माडागम इत्यर्थेन मत्यामित्यादौ ङेरामि कृते नुडाटोः प्राप्तयोः परत्वादाटा नुड्बाध्यते। आटि कर्तव्येऽनल्विधाविति स्थानिवद्भाव-निषेधस्तु न 'नल्यपि' इति ज्ञापनेनानुबन्धकार्ये तस्य निषेधात्। उक्त-न्यासे ङादिसुपोऽनुवृत्त्या ङादेरेवाड्विधानेनोक्तोदाहरणे आण् स्यात् आमि कृते ङादित्वाभावात्। अत्राटः प्रयोजनं तु नुड्बाधनरूपं स्थानि-वद्भावस्तु न विशेषणेनालाश्रयणेऽनल्विधाविति निषेधादितिवाच्य-म्। ङेरामित्यत्र 'ङेर्ङाम्नद्याम्नीभ्यः' इत्येव सूत्रमस्तु ङेर्ङामादेशेन सकलेष्टसिद्धेः। अत्र समाधानं मृग्यमिति तन्न 'ह्रस्वात् तादौ तद्धिते' इत्यत्र ह्रस्वात् तीति वक्तव्ये आदिग्रहणं व्यर्थं सत् ज्ञापयति 'यस्मिन् विधिः' इत्यस्यानित्यत्वम्, तथा च ङान्ते सुपीत्यर्थापत्तावुदाहरणस्यैवो-च्छेदापत्तिरिति समाधानस्य सत्त्वात्। अनित्यत्वस्येष्टानुरोधिप्रवृत्ति-त्वेनाचार्थविपर्यासेनोदाहरणस्योच्छेदापत्तिरित्युक्तेरेवोच्छिन्नत्वादिदं न युक्तमिति परे। ननु ङेर्ङामि कृते इत्संज्ञाऽपि प्राप्ताडागमोऽपि प्रा-प्तस्तत्र 'वार्णादाङ्गं बलीयः' इति परिभषाया नित्यत्वाच्चेत् संज्ञां बा-धित्वाऽऽट् स्यात् ततश्च प्रत्ययादित्वाभावात् ङकारेत्संज्ञालोपौ न स्या-तामिति यथान्यासमेव सम्यगिति परेतरे तदपि न अनुबन्धविनिर्मुक्त-स्यैव सर्वत्र लक्ष्ये उपस्थित्या तदानीं स्थानिवद्भावेनैव ङादित्वं लभ्यं तस्य चानल्विधाविति निषेधादाड्विधायकसूत्रस्यैव वैयर्थ्याङ्गुतपूर्वग-त्याश्रयणस्यैवावश्यकत्वेन दोषाभावान्न्यासः सुवच एवेति प्रति-भाति ॥ १ ॥ अत्रैव सुपीति नानुवर्त्तनीयं तद्धिताधिकारः स्त्र्यधि-कारात् प्राक् पाठ्यः। एवं च स्त्र्यधिकारोक्ता अपि प्रत्ययास्तद्धितसं-ज्ञकाः स्युस्तथा च रमा-गौरीत्यादीनां तद्धितान्तत्वात् प्रातिपदि-कत्वं पट्वीत्यत्र पटुत्वगुणविशिष्टा स्त्रीति विग्रहे 'वोतो गुणवचनात्' इति ङीषि पटु ई इति स्थिते तत्र 'घेर्ङिति' इति गुणे प्राप्ते सम्प्रति 'ओर्गुणः' इति गुणं कर्त्तुं तद्धिताधिकारे पाठारम्भादनुमी-यते ङीषि न गुणस्तत्स्थाने टीषु करणाद्वा गुणाप्राप्तिरिति न कश्चिद्दोष इति कश्चित्। अत्र केचित् पट्वी मृद्वी शब्दयोर्नाम-धातौ 'अवयवेऽचरितार्थानुबन्धाः, इति न्यायेन ङित्वमात्मनेपदार्थं भवतीति टीषि तथा न स्यादिति तदपि न 'ब्राह्मणमाणववाडवा-द्यन्, इति सूत्रे यञि जनि वा फलेऽविशेषाद्यञोऽनुहरस्यैव सिद्धे

यत्न करणमन्यतो विधानार्थं तेन 'पृष्ठादुपसंख्यानं, पृष्ठ्यमिति सिद्धमित्युक्तम् । तत्र यदि तादृशानुबन्धप्रयुक्तमात्मनेपदादिफलं चेदत्रापि यञि तस्य सत्त्वेन यनि तदभावेन च विशेषस्य दर्शनादुक्तिर्व्याहता स्यात् तस्मात् तादृशानुबन्धत्वप्रयुक्तमात्मनेपदादिकार्यं न भवतीत्यस्य कल्पनात् । एवं च 'प्राचां ष्फस्तद्धितः' इति सूत्रे तद्धितग्रहणम् 'श्रौङः श्याम्प्रतिषेधः' इति वार्त्तिकं च 'यस्येति च' इति सूत्रे ईग्रहणमपि न कर्त्तव्यमिति महल्लाघवम् । न चैवं ङीषोऽपि तद्धितसंज्ञायां कृतायां ङकारस्य 'लशक्वतद्धिते' इतीत्संज्ञादुर्लभा अतद्धित इति पर्युदासात् तस्मात् तदर्थं यथान्यासमेवौचितमिति चेत् चुटू इत्यत्र 'चुटुङ्' इति न्यासेन ङकारस्यापीत्संज्ञयेष्टसिद्धेः । यद्यपि 'प्राचां ष्फस्तद्धितः' इति सूत्रे तद्धितग्रहणं प्रातिपदिकद्वारा ङीषर्थं तत् तु विनाऽपि संज्ञां षित्करणसामर्थ्यादेव सिद्ध्यति किमनेन तद्धितग्रहणेन यञन्ते 'यस्येति च' इति लोपार्थमपि न सवर्णदीर्घेणापि रूपसिद्धेः, एवं तर्हि तद्धितग्रहणमिञन्तादपि क्वचित् ष्फप्रत्ययज्ञापनार्थं तेन 'आसुरेरुपसंख्यानम्' आसुरायणीति सिद्धमित्युक्त्या तद्धितग्रहणाकरणरूपलाघवस्यासत्त्वमिति चेत् तपि न 'फटू, इति न्यासेन तत्सिद्धेः । यत् तु गोकक्षशब्दाद्गर्गादित्वाद्यञि ततः क्रौड्यादित्वेन ष्यङि चापि प्रकृतसूत्रेण ष्फप्रत्यये चिकीर्षिते 'भस्याढे' इति पुंवद्भावे गोकक्ष्यशब्दाद्यञन्तात् ष्फे गौकक्ष्यायणीति सिद्ध्यति तद्धितसंज्ञाभावे तु पुंवद्भावाप्राप्त्या यञन्तत्वाभावेन ष्फो न स्यादिति तदपि न क्रौड्यादिषु गोकक्ष्याशब्दस्य पाठाभावेऽपि चत्यभावात् । चाप्तु 'षाद्यञश्चाब्वक्तव्यः' इत्येव सिद्धेरुदीचां मते प्राचां मते तु चापो बाधस्यापि विषये सर्वत्र ग्रहणापकर्षात् ष्फे तेन गौकक्ष्यायणीत्यस्य सिद्धिरिति एतदपकर्षणे बीजं तु तत्सूत्रव्याख्यानमेवावसेयमिति दर्शितरीत्या लाघवस्य सत्त्वेन न काचित् क्षतिरिति । पट्वीत्यादौ गुणोऽपि न सुपीत्यस्यानुवृत्तिर्निष्फलैव । ननु कुरू इति प्रयोगे 'ऊङुतः' इत्यनेन ऊङि कुरु ऊ इति स्थिते 'ओर्गुणः' इति गुणापत्तिरिति वाच्यम् । 'ऊङुतः' इत्यनेन दीर्घोकारविधानस्य दीर्घमात्रफलकत्व ह्रस्वघटितमुङित्येव कुर्याद्दीर्घविधानेन गुणव्यावृत्तेः । रमेत्यादौ टापि रम आ इति स्थिते 'यस्येति च' इत्यनेनाकारलोपे टाप्प्रत्ययाकारस्य पित्वप्रयुक्तानुदात्तस्वरः स्यादिष्यते तु 'एकादेश उदात्तेनोदात्तः' इति तदिदानीं न सिध्येत् लो-

पेनैकादेशत्वाभावात् तदपि न 'यस्येति च' इत्यत्रेकारग्रहणेन ङीपि टापि वा तद्धितकार्याभावस्य ज्ञापनेनाक्षतेः। ननु तर्हि स्त्र्यधिकारात् प्राक् तद्धिताधिकारः कर्त्तव्य एवेति चेन्न ऊङिति दीर्घोच्चारणस्योत्तरार्थं श्वश्रूरित्याद्यर्थमावश्यकत्वेन उङिति न्यासः कर्त्तुमशक्य इति कुरूरित्यत्रैव 'ओर्गुणः' इत्यनेन गुणापत्तेर्दुर्वारत्वात् एवं पट्वीत्यत्र 'घेर्ङिति' इत्यत्र सुब्ग्रहणाभावे गुणः स्यात् तद्व्यावृत्त्यर्थं सुपीत्यस्यावश्यकत्वमिति केचित्। वस्तुतस्तूक्तन्यासे दण्डिनीत्यत्र 'नस्तद्धिते' इति टिलोपः। शुनीत्यत्रातद्धित इति पर्युदासेन सम्प्रसारणाभावः। कुरूरित्यत्र गुणः। रमेत्यत्राकारलोपे इष्टस्वराभावः। एवमन्येऽपि ये ये निर्दिष्टदोषास्ते सर्वे 'डाबुभाभ्याम्' इति सूत्रे डापि डित्करणेन 'स्त्रियाम्' इत्यधिकारोक्तप्रत्यये तद्धितसंज्ञाप्रयुक्तं कार्यं क्वचिदेवेति ज्ञापनेन वारणीयाः। अन्यथा 'मनः' 'अनो बहुव्रीहेः' इति सूत्रद्वयविषयकत्वेन डापष्टिलोपार्थं डित्वस्य वैयर्थ्यमेव 'नस्तद्धिते' इत्यनेन तत्सिद्धेः। कुरूरित्यत्र ङूङ्विधानेन ङित्वाट्टिलोपे गुणाभावाच्च 'श्वशुरस्योकाराकारलोपश्च' इति वार्त्तिकेऽकारग्रहणाकरणलाघवं च 'टेः' इत्यनेनैवाकारलोपसिद्धेरिति परे ॥ २ ॥

३९ 'ङसिङसोश्च' अत्र 'ङितः' इत्येवास्तु एङो ङितोऽति परे पूर्वरूपमित्यर्थः। एतावतैव हरेर्भानोरित्यादीनां सिद्ध्या व्यर्थो गुरुभूतन्यास इति केचित्। यद्यपि 'ऋत उत्' इत्यत्रेत एव ङसि ङसोरित्यस्यानुवृत्त्या मातुर्धातुरित्यादि सिद्ध्यति तथापि जाग्रतीत्यत्राप्युत्वापत्तेः 'सार्वधातुकमपित्' इति भिस्थानिकातेर्ङित्त्वेन तदवयवाकारे परे ऋकारस्य तदापत्तिः स्पष्टैवेति चेन्न 'लक्षणप्रतिपदोक्त'-परिभाषया तादृशस्य ङितोऽग्रहणेन 'आतिदेशिकमनित्यम्' इति न्यायेन लक्ष्यानुसारात् तत्रानित्यत्वकल्पनया वाऽदोषात् सुवचमेवेत्यन्ये।

(४०) 'अच्च घेः'। अत्र 'घेर्डा, इति न्यासेनेष्टसिद्धिरिति केचित्। घेः परस्य ङेर्डावादेश इति तदर्थः। हरि ङि इति दशायां ङेर्डावादेशे डकारस्येत्वे 'टेः' इति टिलोपे हरावित्यादिरूपसिद्धेः। आचक्षाणण्यन्तादपि हरिशब्दात् क्विपि टिलोपणिलोपयोर्ङौ रेफस्याकारादेशे वृद्धौ हाविति उक्तन्यासेऽपि टिलोपे पुनर्ङौ निमित्तकटिलोपे हावित्येवेति चेन्न द्वितीयटिलोपे कर्त्तव्ये णिलोपस्य यद्यपि 'क्वौ लुप्त'

न्यायेन स्थानिवद्भावाभावेऽपि प्रथमटिलोपस्यासिद्धत्वेन स्थानिवत्त्वेन वा द्वितीयटिलोपाभावे इष्टाविति विंशतावित्यत्र 'तिविंशतेर्डिति' इति टिलोपे विंशाविति फलभेदस्य स्पष्टत्वात् यथान्यासमेव रमणीयमिति । प्रकृतसूत्रस्थशब्दरत्नोक्तेन ङित्त्वमाश्रित्याकारप्रत्याख्यानपरभाष्येणोक्तोदाहरणप्रत्याख्याने तु न्यासः सुवच एव प्रतिभाति ।

(४१) 'अनङ् सौ' सोर्डा, इत्येव सिद्धेऽनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थम् । तेन उशनसः सम्बुद्धावनङ् सिध्यतीति प्राञ्चः । तथापि सोर्डेत्युक्तौ ऋदुशनेत्युत्तरसूत्रेणापि डा स्यात्, ततश्चोशनसित्यत्र 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः स्यात्, पुरुदंशसित्यत्र तु 'सान्तमहत' इति स्यात्, तथाऽपि संज्ञापूर्वकविधेरनित्यत्वात् 'अकृतव्यूह'-परिभाषया वा तत्समाधेयमिति तेषामाशयः । न च सखिशब्दात् णिचि क्विपि टिलोपे 'एकदेशविकृत'-न्यायेन तच्छब्दत्वादनङि डादेशे वैषम्यमिति चेत् णिलोपस्य टिलोपस्य वा स्थानिवत्त्वेन तदप्राप्तेः । यत् तु सखायमिच्छति सखीयति ततः क्विपि सखित् अस्मान् ङिःसख्या डादेशे टिलोपे सखेति अनङो विभक्तिनिमित्तत्वेन पदकार्यत्वाभावात् 'गौणमुख्य'-न्यायाप्रवृत्तेनावारणात्, डादेशस्य तत्त्वेनाभावेऽपि वैषम्यमिति तदपि न, असम्बुद्धिसोर्निर्दिश्यमानत्वेन तुग्विशिष्टस्य निर्दिश्यमानत्वाभावेनानङो डादेशस्य च विभक्त्यनिमित्तकत्वेन पदकार्यत्वमतो 'गौणमुख्य'-न्यायेन वारणात् । प्राञ्च इति वार्त्तिकस्य वैकल्पिकनलोपविध्यर्थमावश्यकत्वेनानङोऽपि तत्त्वार्थमावश्यकत्वात्, वार्त्तिकेनैवानङ्विधानादरुचिर्द्योतनादित्यवधेयम् ।

(४२) 'अलोऽन्त्यात् पूर्व उपधा' अत्र 'अलुपोत्तम उपधा' इत्येव सुवचम् । उत्तमोऽन्त्यस्तत्समीपवर्त्युपोत्तमस्तादृशोऽलुपधासंज्ञ इत्यर्थः । न चान्त्यत्वस्य वर्णत्वव्याप्यत्वाभावात् दम्भधातौ म्भ इत्यस्यान्त्यत्वेन तत्समीपस्थस्याकारस्योपधात्वेन 'पोरदुपधात्' इति यत् स्यात् । सिद्धान्ते त्वलो वर्णस्यैवोपादानादवध्यवधिमतोः साजात्येन पूर्वस्यापि वर्णस्यैव सम्भवात् न दोष इति वाच्यम्, 'अत उपधायाः' इत्यत्रोपधाग्रहणसामर्थ्यादन्त्यस्य वर्णस्यैव ग्रहणेनादोषात् । अन्यथाऽनेकवर्णव्यवहितस्याप्यत उपधात्वेन तत्रावर्त्याकाभात् तद्वैयर्थ्यं स्पष्टमेवेति दिक् ।

(४१) 'हल्ङ्याब्भ्यो दीर्घात्' । अत्र 'ङ्यापः सोः' इत्येव सुवचम् । इति मनोरमाकृत् । ईकाराकाररूपौ यौ ङ्यापौ तदन्तात्परस्य सोर्लोप इति तदर्थः । अयं भावः अतिखट्वो निष्कौशाम्बिरित्यादौ लोपवारणाय दीर्घग्रहणप्रत्याख्यानपरभाष्यतोऽस्यार्थस्यैव लाभात् दीर्घग्रहणस्य फलाभात् । हलन्तेभ्यस्तु तेषां संयोगान्तलोपेनैव निर्वाहात् । न च सिद्धान्ते ङ्यापोस्तिस्योरपि विशेषणत्वेन ताभ्यामपि तयोर्लोप इदानीं स न स्यादिति वाच्यम् हिहल्ग्रहणं तिस्योर्ग्रहणञ्च न कर्त्तव्यं भवतीति भाष्योक्त्या सिद्धान्तेऽपि तयोस्तद्विशेषणत्वायोगात् तत्फलस्य वक्तुमशक्यत्वात् । न चैवं सखा राजेत्यादौ 'पूर्वत्रासिद्धम्, इति नलोप इष्ट्या संयोगान्तलोपस्यासिद्धत्वेन पदान्तनस्यैवाभावेन नलोपो न स्यादिति वाच्यम् । 'नङि सम्बुद्ध्योः' इति सम्बुद्धिग्रहणेन नलोपे संयोगान्तलोपस्य सिद्धत्वबोधनेनादोषात् । अन्यथा हे राजन्नित्यादौ नलोपाप्राप्त्या निषेध्याभावात् तद्वैयर्थ्यस्य स्पष्टत्वात् ज्ञापकस्य सजातीयापेक्षत्वात् नकारविभक्त्योर्यत्रानन्तर्यं तत्रैव सिद्धत्वज्ञापनेन गोमानित्यादौ नलोपापत्तिरपि न । न च तत्र सम्बुद्धिग्रहणस्य हेब्रह्मन् हे चर्मन् इत्यादौ लुकि नलोपव्यावृत्तिः फलं 'सम्बुद्धौ नपुंसकानाम्' इति वार्त्तिकेन विकल्पविधानस्यैवावश्यकत्वेन 'नलुमताङ्गस्य' इति निषेधेन विभक्तिपरत्वाभावेन वा नपुंसकार्थत्वाभावात् । न च 'वा नपुंसकानाम्' इति भाष्योक्त्या फलिते वार्त्तिके सम्बुद्धिपदसम्बन्धाय तद्ग्रहणस्यावश्यकत्वेनान्यथा सर्वत्र नपुंसके विकल्पापत्तिः कथमुक्तार्थज्ञापकमित्यपि न, तथा सति वार्त्तिके एव कुर्यात्सूत्रे तत्करणवैयर्थ्येन ज्ञापकत्वस्यैव लाभात् । अभिनोत्रेत्यत्र 'दश्च' इति रुत्वे तस्य 'अतो रोः' इत्युत्वेऽपि संयोगान्तलोपो नासिद्धः 'संयोगान्तलोपो रोरुत्वे' इति वार्त्तिकेन तदसिद्धत्वनिषेधात् । अपूर्ववार्त्तिकाश्रयणं तु न 'हरिवो मेदिनं त्वा' इत्यर्थं तस्यावश्यकत्वात् अन्यथा हरिशब्दान्मतुपि सम्बुद्धौ मतुपो मस्य वकारे नुमागमे संयोगान्तलोपे 'मतुवसो रुः' इति रुत्वे 'हशि च' इत्युत्वे कर्त्तव्ये नलोपस्यासिद्धत्वेन तन्न स्यात् । अभिनोत्रेत्यत्रापि पूर्वरूपे संयोगान्तलोपो नासिद्धः 'संयोगान्तलोपो रो रुत्वे' इति वार्त्तिकेन 'न मुने' इतिवदुत्वे कर्त्तव्ये कृते च तस्य सिद्धत्वबोधनात् । च चैवं बिभर्तेर्जागर्त्तेश्च लङि तिपि गुणे अबिभर्भवान् अजागर्भवानित्यादौ 'रात्सस्य' इति नियमात्संयोगान्त-

लोपो न स्यात् 'रात्सस्य' इत्यत्र तकारस्यापि प्रश्लेषेण तस्यापि लोपेनादोषात् । सावपि पदमिति 'स्वादिषु' इत्यत्र योगविभागपरकभाष्यतो लाभादुषास्रदित्यादौ सौ पदत्वेन दत्वसंयोगादिलोपयोः प्राप्तयोर्दत्वस्यासिद्धत्वेन संयोगादिसकारलोपेऽसान्तत्वाद्दत्वाभावे सकारस्य रुत्वे विसर्गे च उषास्र इति स्यात् हल्ग्रहणे तु सोर्लोपे द्वितीयसस्य संयोगादित्वाभावेन तदप्राप्त्या दत्वेऽभिमतं रूपं भवतीति वाच्यम् । 'वस्वादिषु दत्वं सिद्धं वाच्यम्' इति वार्त्तिकेन तस्य सिद्धत्वेनादोषात् सस्य स्रंसादिविशेषणत्वाभावेऽप्यनिष्टापादनसंभवेन वार्त्तिकाश्रयणस्यैव युक्तत्वात् । सौ पदत्वे सखेत्यादौ संयोगान्तलोपस्यासिद्धत्वेन प्रथमं नलोपे सोरुत्वे विसर्गे चानिष्टापत्तिस्तु न शङ्क्या 'इतोऽत्सर्वनामस्थाने' इत्यकारे उक्तरीत्या नलोपे पन्था इत्यादिसिद्धौ 'पथिमथि' इत्यात्वविधानस्य प्रथमं नलोपापेक्षया सुलोपज्ञापनेनादोषात् । न चैवं सति हे पन्था इत्यादौ 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घप्राप्त्या तत्रा कारविधानस्य चारितार्थ्येन ज्ञापकता कथमिति वाच्यम् एवं चेत् 'नङि सम्बुद्ध्योः' इत्यनेनैवोक्तार्थज्ञापनेनादोषात् तद्यथा 'नङि सम्बुद्ध्योः' इत्यत्र ङिसम्बुद्ध्योः षष्ठ्यन्तत्वे न ङ्यन्तस्य सम्बुद्ध्यन्तस्य च नलोपो नेति व्याख्यानेन नलोपात्पूर्वं संयोगान्तलोपं विना सम्बुद्ध्यन्तप्रातिपदिकान्तनकाराभावेन निषेधाप्राप्त्या वैयर्थ्येन नलोपात्पूर्वं संयोगान्तलोपज्ञापनस्य संभवात् । यत् तु यद्येवं विद्वानित्यत्र 'सान्तमहतः' इतिदीर्घात्परत्वान्नित्यत्वाच्च दत्वे तस्यैव संयोगान्तलोपे विद्वन्निति स्यात् दीर्घस्तु द्विवचनादौ चरितार्थः पिपठीरित्यत्र संयोगादिलोपे रुत्वविसर्गयोः 'र्वोरुपधायाः' इति दीर्घोऽपि न स्यादिति तन्न एतत्सर्वं सौ पदत्वमाश्रित्य सिद्धकाण्डे दत्वं चाश्रित्योषास्रदित्यादिसाधने वक्तव्यम्, तदेव न तिपि सस्य दत्वविधायक-'तिप्यनस्तेः' इति ज्ञापनेन संयोगादिलोपात् प्राक् विभक्तिसंयोगान्तलोपज्ञापनेनादोषात् । इतरथा दत्वविधानवैयर्थ्यस्य स्पष्टत्वात् । भूयादित्यत्रापि न दोषो धात्ववयवसंयोगादिलोपात् प्राक् विभक्तिसंयोगान्तलोपज्ञापनेनाच्चतः । यत् तु राजेधते चक्रात्र राजाच्छत्रमित्यादौ संयोगान्तलोपस्यासिद्धत्वादृत्त्रादिकं न स्यादिति तदपि न 'संयोगान्तलोपो रोरुत्वे' इत्यत्र सन्धिकार्यें संयोगान्तलोपः सिद्ध इत्यर्थकस्य 'संयोगान्तलोपः सन्धौ' इत्यस्यैव

करणेनादोषात्। अविभाराज्यमित्यादौ संयोगान्तलोपस्यासिद्धत्वेन दीर्घो न स्यादिति तु वक्तुमशक्यम्, अजर्घा लीढ इति भाष्योदाहरणे दीर्घे कर्तव्ये ढत्वादीनामसिद्धत्वेन तदप्राप्त्या तदुदाहरणपरभाष्यप्रामाण्यात् 'पूर्वत्रासिद्धम्' इत्यत्र पूर्वपदेन ढ्रलोपसूत्रस्याग्रहणज्ञापने नाक्षतेरिति न्यासे न काचित् क्षतिरिति प्रतिभाति।

(४४) 'अचो ञ्णिति' इदं सूत्रं मास्तु 'अत उपधायाः' इत्यत्रैव ञ्णितीति पाठ्यम्। गौरित्यादौ वृद्ध्यर्थम् 'ओतो वृद्धिः' इत्येवास्तु। सर्वनामस्थाने ओकारस्य वृद्धिरिति तदर्थः। 'सख्युरसम्बुद्धौ' इत्यत्र वृद्धेरेवानुवृत्त्या सख्युरङ्गस्य वृद्धिरसम्बुद्धौ सर्वनामस्थाने इत्यर्थेन 'अलोऽन्त्य' परिभाषयेष्टसिद्धेः। न च कुम्भकार इत्यादौ वृद्ध्यनापत्तिः, तत्रापि 'सार्वधातुकार्धधातुकयोः' इति गुणोत्तरम् 'अत उपधायाः' इति वृद्धौ तत्सिद्धेः। न च रजयतीत्याद्यर्थम् 'अत उपधायाः' इत्यस्यादुपधाविहिते ञिति णितीत्यर्थस्यावश्यकत्वेन प्रकृते वृद्ध्यनापत्तिः। अन्यथा रजयतीत्यत्रैव वृद्ध्यापत्तेः। राग इत्यत्र तु 'घञि च भावकरणयोः' इत्यत्र विषयसप्तमीस्वीकारेणादुपधाविहितत्वेन वृद्धौ बाधकाभावस्तदा कुम्भकार इत्यपि फलम्। भूशब्दादाख्यानण्यन्तात्किटि अपि 'प्रकृत्यैकाच्' इति टिलोपाभावे वृद्धौ भावयतीत्यपि फलम्। अत्र णिचः प्रातिपदिकविहितत्वेनार्धधातुकत्वाभावाद्गुणाभावेनेष्टसिद्धत्वायोगात्। यदि तु रजयतीत्यत्र भवतु वृद्धिः 'मितां ह्रस्वः' इत्यनेन ह्रस्वत्वे रूपसिद्धेर्विहितविशेषणे प्रमाणाभावेन राग इत्याद्यर्थं घञि चेत्यत्रापि विषयसप्तम्याः स्वीकारस्त्वऽपि रूपसिद्धौ कुम्भकारशब्दे गुणे कृतेऽत उपधेत्यनेनैव सिद्धिरिति तदा भावयतीत्याद्येवोदाहरणानि। न च 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इत्यत्र क्नसुसाहचर्यात् दैवादिकस्यैव रञ्जेर्ग्रहणेन रजयतीत्यत्र मित्त्वाभावेन ह्रस्वत्वाभावेनेष्टसिद्धिरिति वाच्यम्। 'साहचर्य'-परिभाषया दोषदानस्यानुचितत्वात्। तत्रोभयोर्ग्रहणस्य सकलेष्टत्वाच्च। श्रीवल इत्यस्यौणादिकत्वेनाव्युत्पन्नत्वात्। चकावित्यस्य 'कास्प्रत्यया' इत्यत्र 'कास अनेकाज्ग्रहणम्' इत्यादिभाष्योक्त्या फलभेदस्य स्फुटतयाऽनभिधानाच्चात्र न फलमित्यलम्।

(४५) 'आटश्च' 'लुङ् लङ् लृङ्' इत्याऽऽदिनाजादिधातुसाधारणमड्विधानेनैव सिद्धौ वार्तिककृता 'आडजादीनाम्' इति व्याख्यातम्।

नन्वटि सति 'वृद्धिरेचि' इत्यनेनैधत इत्यादिसिद्धावपि ऐन्दिदद्-
इत्यादि न सिद्ध्येत् तत्र वृद्धेरप्राप्तेः । किञ्च 'अतो गुणे' इति पररूपप्रवृ-
त्त्यैधतेत्याद्यपि न सिद्ध्येत् । यदि तु 'आटश्च' इत्यस्य स्थाने 'अटश्च'
इति क्रियते तथा सत्यैधतेत्यादौ पररूपापवादवृद्ध्येष्टसिद्धावपि
आश्ववोऽहसन्नित्यत्र वृद्धिः स्यात् । 'रुदश्च पञ्चभ्यः', 'अड्गार्ग्यगा-
लवयोः' इति विहिताडागमस्य सत्त्वात् 'अतो रोरप्लुतात्' इति
रोरुत्वेऽचपरत्वादिति चेत् । 'उपसर्गादृति धातौ' इत्यतो धा-
तावित्यस्यापकर्षादजादौ धातावित्यस्य धात्ववयवेऽचीति वा व्या-
ख्यानात् । 'आण्नद्याः' इत्यत्र तु अट् वक्तुमशक्यो बहुश्रेयस्यै
इत्यत्र 'वृद्धिरेचि' इति वृद्धिं बाधित्वा 'अतो गुणे' इति पररू-
पापत्तेः । 'अटश्च' इत्यस्य तु न प्रवृत्तिस्तत्र धातावित्यस्यापक-
र्षाद्धात्ववयवाच्परत्वाभावात् । आटो विधानसामर्थ्यमपि न
बहुश्रेयस्यामित्यादौ नुड्बाधनेन चारितार्थ्यात् । न चाश्ववोऽसी-
त्यादौ ओकारस्यान्तवद्भावे नाटत्वात् परत्राजादिधातुसत्त्वाश्रोतादो-
षस्तदवस्थ इति वाच्यम् । 'आद्गुणः' इत्यस्मादादित्यनुवर्त्त्या-
काररूपादटोऽचि परे वृद्धिरिति व्याख्यानेनादोषात् । एतेनाट-
श्चेत्युक्तावटगतावित्यस्माल्ल्युट्यटनमित्यत्रातिप्रसङ्गः स्यादित्येतदपि
निरस्तम् । यत् तु शेखरकृता 'आटश्च' इत्यस्य प्रत्याख्यानेऽजादीना-
मप्यडागमे 'अतो गुणे' इति पररूपमाशङ्क्य 'अतो गुणे' इत्य-
स्यानन्तरम् 'अटो न' इति विन्यस्य अटः पररूपं नेत्यर्थं इति
व्याख्यायातीदित्यादौ पररूपं नेत्युक्तम् । एवं च 'अटो न' इति
न्यासेनैव बहुश्रेयस्यै इत्यादावपि पररूपनिषेधे सिद्धे पश्चाट् वक्तु-
मशक्य इति ग्रन्थो विरुद्ध इत्याहुस्तन्न । 'अटो न' इत्यस्य 'अटश्च'
इति वृद्धि बाधकपररूपबाधकत्वस्यैव सप्रमाणत्वात् । प्रमाणं तु
'आटश्च' इति चकारेण पुनर्वृद्धिविधानं बाधकबाधनार्थम् तेन 'आटो न'
'उस्योमाङ्क्षु' इत्यादि नारम्भणीयमिति वाच्यम् । अन्यथा 'वृद्धि-
रेचि' इति वृद्धिबाधकपररूपबाधनाय तस्यावश्यकतयोक्तिर्व्याहतैव
स्यात्, बहुश्रेयस्यै इत्यत्र 'आण्नद्याः' इत्यत्र 'अण्नद्याः' इत्युक्तौ पररूपं
स्यादेवेति केचित् । अत्रापि 'अण्नद्याः' इत्येव सुवचम् । ह्रस्वविधा-
नसामर्थ्यात् 'अतो गुणे' इत्यस्याप्रवृत्तौ यथायथं वृद्धिसवर्णदीर्घा-
भ्यां बहुश्रेयस्यै बहुश्रेयस्याः इत्यादिरूपसिद्धेः । ननु परत्वादाटानुडा-

ध्यत इत्युत्तरग्रन्थपर्यालोचनया ङेरामि कृते तस्य नुडागमनिवारणार्थमड्विधानावश्यकत्वात् सामर्थ्यमुपक्षीणमिति चेदेवं तर्हि 'ङस्वनद्यापः' इत्यस्यानन्तरं 'ङेर्न' इत्येव सूच्यतामामीत्यस्यानुवृत्त्या ङेरामो नुड्नेत्यर्थलाभात् तस्मात् 'अणुद्याः' इति विधानसामर्थ्यात् 'अतो गुणे' इति न प्रवर्त्तत इत्यन्ये। न चैवमपि आतत् आतीदित्यादि न सिद्ध्यति 'अटश्च' इत्यस्य ऐन्दिददित्यादौ सावकाशतया परत्वादिह्यातो गुण इत्यस्यैव प्रवृत्तेरिति वाच्यम्। 'अटो न' 'उस्योमाङ्क्ष्वाटः' इति सूत्रवार्त्तिकादिप्रत्याख्यानाय 'अटश्च' इत्यत्र 'च' इति-योगविभागेन पुनर्वृद्धिविधानं बाधकबाधनार्थमित्यभ्युपगमादातत् आतीत् बहुश्रेयस्यै इत्यादौ सर्वत्राटश्चेत्यस्यैव प्रवृत्तेः। अश्वपोऽक्षमित्याद्यर्थं धातावित्यस्यापकर्षणमपि न कार्यम्। तत्रान्तरङ्गपरिभाषया वृद्धिवारणात्। तद्यथा अटि कृतेऽस्वपस् अहमक्षिति स्थिते सकारस्य रुत्वे 'अतो रोः' 'इत्युत्वेऽस्वप-उ-अहमक्षिति स्थिते पकारोत्तराकारस्योकारेण वृद्धिः प्राप्ता तत्र पदैकसम्बन्धिवर्णापेक्षत्वरूपेण 'न धातुलोप'-इति सूत्रस्थभाष्यस्वरससिद्धेनान्तरङ्गत्ववता वृद्ध्यादेशेन पदद्वयसम्बन्धिवर्णद्वयापेक्षस्वरूपबहिरङ्गत्ववतो 'अतो रोः' इति विहितस्योत्वस्यासिद्धत्वेन वृद्धेरप्राप्तेर्न दोषलेशोऽपि। यत् तु 'नाजानन्तर्ये'-इति परिभाषया निषेधेन 'अन्तरङ्ग'-परिभाषाया अप्रवृत्त्या दोषस्तदवस्थ इति वाच्यम्। तस्या अनित्यत्वात् अनित्यत्वस्येष्टानुरोधिप्रवृत्तेश्चाप्रवृत्त्यैवेष्टसिद्धेः। किञ्च 'षत्वतुकोरसिद्धः' इत्यत्रत्यतुग्ग्रहणज्ञापितान्तरङ्गपरिभाषानित्यत्वस्वरूपैवैषा, तथा सति पूर्वोक्तयुक्त्याऽत्र प्रवृत्तेरिष्टत्वादिष्टसिद्धिरिति परे। न च 'आडजादीनाम्' इति सूत्राभावे आस्ताम् आसन्निति कथमटा सिद्ध्यति 'श्नसोः' इत्यल्लोपेऽटश्चेति तत्र वृद्ध्यप्रवृत्तेरिति चेन्नैवम्। अन्तरङ्गत्वात् प्रागेवाडागमे कृते वृद्धौ च कृतायां पश्चात् 'श्नसोः' अल्लोपस्याप्रसक्तेः। न च 'वार्णादाङ्गम्' इति परिभाषया वृद्धेः प्रागल्लोप एव स्यादिति शङ्क्यं व्याश्रयत्वात् वार्णपरिभाषाया अनित्यत्वाद्वा। तत्र हि 'श्नसोरल्लोपः' इत्यत्रत्यतपरकरणमेव लिङ्गम्। यदि वृद्धेः प्रागेवाल्लोपः स्यात् तपरकरणमनर्थकमेव। यद्यपि वैदिकप्रक्रियायामानट् आव इत्यादौ 'छन्दस्यपि दृश्यते' इत्याडागमस्य वक्ष्यमाणत्वात् तदर्थमाड्विधायकं कर्त्तव्यम्। तथाप्याट् विनैवाड्व्यत्ययेनाङ्पूर्वकत्वेन वा व्याख्येयमित्यलं विस्तरेण।

(४६) 'सर्वनाम्नः स्याड्ढ्रस्वश्च' अत्र 'सर्वनाम्नोऽसुङ्' इत्येवास्तु। अन्तरङ्गत्वात् पूर्वं याटि याटि परे ङित्त्वादन्त्यादेशेऽसुङि सर्वस्यामित्यादिसिद्धेः। याट्करणं ह्रस्वविधानं च व्यर्थमिति चेदमुष्यै इत्यादीनामसिद्ध्यापत्तेः। संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणस्य सिद्धान्ततया पूर्वमसुङि मान्तत्वेन मुत्वानापत्त्या पूर्वं मुत्वे पश्चादसुङ्सिद्धेः स्पष्टतया चोक्तरूपाणामभावात्। एवं चामुमुयङित्यादिवद्व्याख्यानभेदेन रूपद्वयस्यापत्तेश्च। न चैवमपि चकारघटितम् 'असुङ् च' इति न्यासेन तेनैव याटोऽसुङश्चापि विधानान्नोक्तदोष इति वाच्यम्। 'विभाषाद्वितीया'-इति सूत्रेण विनिगमकाभावादुभयोरपि विकल्पे द्वितीयायै इत्यसिद्ध्यापत्तेः। असुङो याडपवादत्वेन तद्विषये याटो दुर्लभत्वापत्तेश्च। वस्तुतस्तु 'आमि सर्वनाम्नः सुट् याटो ह्रस्वश्च' इति-सूत्रयितुमुचितम्। न चैवं याट एव ह्रस्वापत्तिर्दीर्घोच्चारणसामर्थ्यात्। न च दीर्घोच्चारणाभावे 'अतो गुणे' इति पररूपापत्तिः ह्रस्वविधानेऽप्याकारसामर्थ्यादेव 'अतो गुणे' इत्यस्य वारयितुं शक्यत्वात्। एवं च 'सर्वनाम्नोऽस्यङ्' इत्येव सुवचम्। आबन्तसर्वनाम्नोऽस्यङ् स्यात् ङितीत्यर्थात् न कश्चिद्दोषः। न चान्तरतम्यादवङ्सूत्रस्थभाष्यरीत्या तस्योदात्तत्वे 'एकादेश उदात्तेनोदात्तः' इत्यनेन विभक्तेरुदात्तत्वापत्तिर्युक्ता तत्सामर्थ्यादाद्युदात्तनिपातनवदन्तानुदात्तपाठेनादोषात्। नन्वस्यङादेशेऽस्यै इत्यादौ हलि लोपापत्तिः 'हलि लोपः' इत्यस्य स्थाने 'वलि लोपः' इति न्यासेन तत्रानाप्यक इत्यतोऽन इत्यस्यानुवृत्त्याऽनो लोपो वलीत्यर्थात्। 'येन नाव्यवधान-' न्यायेनैकवर्णव्यवधानेऽपि शास्त्रप्रवृत्त्या दोषाभावात्। केचित् तु अश्वक्षीरेत्यनन्तरं 'सर्वनाम्नोऽच्च याटः सुट्' इति पाठ्यम्। तत 'आमि', ततः 'त्रेस्त्रयः' इति यथान्यासम्। एवं च मण्डूकप्लुतेः सामर्थ्यस्य चानाश्रयणात् 'याटो ह्रस्वश्च' इति मनोरमोत्प्रेक्षितन्यासादपि लाघवम्। अथवा 'आमि सर्वनाम्नः सुट्' इत्यस्यानन्तरम् 'अच्च याटः' 'याटोऽच्च' इति वा न्यासः कार्यः, पूर्वसूत्रात् सर्वनाम्नः सुडित्यनुवर्त्य याटः सुट् सर्वनाम्नोऽकारोऽन्तादेश इत्यर्थात् महल्लाघवम्।

(४७) यत् तु 'ङिति ह्रस्वश्च' 'वामि' इत्युभयत्र 'वाचि ह्रस्वश्च' इति विन्यस्येयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्र-

स्त्रौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तोऽजादाविन्यर्थं स्वीकृत्य मत्यै मतये श्रोणाम् श्रियामित्यादाविष्टसिद्धिं दर्शयित्वा न्यासं सुवचं वदन्ति तन्न, 'सन्निपात'-परिभाषाज्ञापनेनेष्टसिद्धेरभावात् तत्सम्पादनाय 'वामि,' इत्यस्यावश्यकत्वात्। तथा हि श्रोणामित्यत्राजादित्वमुपजीव्यजायमाने नदीत्वे नुड्विधानद्वाराऽजादित्वविघातेन नुडप्राप्त्या वामीत्यस्यावश्यकत्वं तत्सत्त्वे तु नुड्विशिष्टे 'यदागम'-न्यायेनाम्त्वात् सन्निपातविघाताभावः स्पष्ट एव। भवन्मतेऽजादित्वस्य वर्णत्वव्याप्यधर्मघटितत्वेन 'यदागम'-न्यायेनाम्त्वस्य विरहेण तद्विरोधोऽपि स्पष्ट एव। मतिश्श्रोमा चेति द्वन्द्वेऽचपरत्वेनेदानीं मतिशब्दस्य नदीत्वेन घित्वाभावात् पूर्वनिपातानापत्तेश्च। यद्यपि मतिश्च चित्रङ्चेति द्वन्द्वे सिद्धान्तेऽपि ङित्परत्वेनानदीत्वाय प्रत्ययाक्षेपस्यावश्यकत्वेन नोक्तदोषावकाशः। न च सिद्धान्तेऽपि 'वापि ह्रस्वश्च' इति न्यासेन सिद्धे योगविभागवैयर्थ्येन परिभाषाज्ञापनेनोक्तदोषदानस्यासम्भवस्तस्यानित्यत्वाच्च नोक्तदोष इति वाच्यम्। 'ङिति ह्रस्वश्च' इत्यत्र नित्यस्त्रीत्वसम्बन्धो 'वामि' इत्यत्रातिश्रियामतिश्रीणां ब्राह्मणानामिति सिद्ध्यर्थं तदसम्बन्ध इति भाष्यसम्मतसिद्धान्तस्यासिद्ध्या सुमती इत्यत्र शोभना मतिर्ययोरिति विग्रहे बहुव्रीहावजादिप्रत्ययपरत्वेन नदीत्वे 'न पूजनात्' इति निषेधस्य 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतः प्रागेव प्रवृत्त्या 'नद्यृतश्च' इति कबापत्तेश्चेति न्यासो न सम्यगिति प्रतिभाति।

(४८) 'अद्ड्डतरादिभ्यः पञ्चभ्यः'। अत्र 'दुक्' इति न्यासेनैव सिद्धे किमर्थं यथान्यासमिति चेत् कतरशब्दाण्णिचि क्विपि टिलोपेऽल्लोपस्य स्थानिवत्त्वात् पुनष्टिलोपाभावे दुकि कतर्द् इति यथान्यासे कतरदिति। एवं कतरशब्दस्याच्छन्देन समासे णिचि क्विपि टिलोपणिलोपयोरुक्तमेव रूपम्। तथा स्त्रीत्वविवक्षायां तदनुकरणे 'उगितश्च' इति ङीबापत्तिः उक्तङीबन्तात् तरप्रत्यये 'उगितश्च' इति लोपो वैकल्पिकह्रस्वत्वापत्तिश्चेत्यादि बहूपप्लवात्। वस्तुतस्तु सर्वादिसूत्रस्य 'अनुपसर्जनात्' इति योगः प्रत्याख्यायते तदेवाभिसम्भन्त्स्यामोऽनुपसर्जनात् अ-अदितिकिमिदम् अ-अदिति अकारात्कारौ विधीयमानौ अनुपसर्जनस्य द्रष्टव्यौ, इति भाष्यादुक्तोदाहरणानामनभिधानादत्र दोषं विभावयन्तु सुधिय इति शम्।

(४९) 'षट्चतुर्भ्यश्च' न चात्र चतुर्ग्रहणं मास्तु 'ष्णान्ता षट्' इति सूत्रे रेफयुक्त 'ष्र्णान्ता' इति पाठेन रेफान्तस्यापि षट्संज्ञया चतुर्शब्दादप्याम्नो नुट् सिद्धिरिति वाच्यम्। चत्वार इत्यादौ 'षड्भ्यो लुक्' इति जश्शसोर्लुगापत्तेः। रेफान्तभिन्नेभ्यः षड्भ्यो लुगित्यर्थकेन 'षड्भ्यो लुगरः' इति न्यासेन यद्यपि लुग्वारणं सम्भवति तथापि लाघवाभावेन प्रयासवैफल्यमिति ध्येयम्। 'षट्कतिकतिपयचतुरां थुक्' इत्यत्र षट्संज्ञयैव सिद्धौ चतुर्ग्रहणाकरणेन महल्लाघवमिति तु वक्तुमशक्यम्। तत्र षडिति स्वरूपस्यैव ग्रहणात्। अत्र मानं तत्रत्यकतिपयग्रहणमेव, अन्यथा 'डति च' इति षट्संज्ञयैव कतिशब्दस्यापि थुक्सिद्धौ तद्व्यर्थं स्यादिति भावः। मास्तु कतिग्रहणमपि षट्संज्ञकग्रहणेन कतिचतुरोर्ग्रहणादेवेष्टसिद्धिरित्यपि न युक्तम्। संज्ञाग्रहणे नान्तस्यापि षट्संज्ञकस्य थुगापत्तेः। न च सटा बाधस्तत्रासंख्यादेरिति पर्युदासात् तु संख्यापूर्वस्यैकादशपञ्चदशेत्यादौ थुगापत्तेर्दुर्वारत्वात्। वस्तुतस्तु थुग्विधायके नान्तभिन्नस्य षट्संज्ञकस्य थुगित्यर्थके 'अनः' इति न्यासे दोषाभवेन न्यासः सुवच इति प्रतिभाति।

(५०) यत्तु 'इदमो मः' इत्यत्र 'सो मः' इति विन्यस्य 'त्यदादीनामः' इत्यतस्त्यदादि पदमनुवर्त्य मान्तस्य त्यदादेरित्यर्थेन तादृशस्येदम्शब्दस्यैव सत्त्वात् किम्शब्दस्य तु द्विशब्दादग्रे पठितत्वात् 'द्विपर्यन्तानामेवेष्टिः' इत्युक्त्या किमः कादेशस्य विशेषविहितत्वाच्चादोषेण न्यासं सुवचमाहुस्तन्न, सम्प्रति 'दश्च' इत्यादौ त्यदादिपदस्यानुवृत्त्या 'दश्च' 'यस्सौ' 'तदोः सः सौ' इत्यादिविहितमकारादीनां पर्यायतापत्तेः। यद्यपि 'दश्च' इत्यस्य सामान्यविभक्तिनिमित्तकस्य विशेषविभक्तिनिमित्तकाभ्यां यादेशसादेशाभ्यां बाधस्तथापि समाननिमित्तकयोः 'यस्सौ' 'तदोः सः सौ' इत्यनयोः पर्यायतापत्तिस्तदवस्थैव, सिद्धान्ते 'यस्सौ' इत्यस्येदंविषयत्वेन नोक्तदोषावकाशः। यदि 'दश्च' इत्यतः प्राक् 'इदोऽयपुंसि' इति सूत्रं पठित्वा 'दश्च' इत्यत्र 'इदोऽयपुंसि' इत्यत इदोऽनुवृत्त्या त्यदादेरिदो दकारस्य मः स्यादित्यर्थः। एवं 'यस्सौ' इत्यादौ इदोऽनुवृत्त्या त्यदादेरिदो दकारस्य यादेश इत्यर्थेन विशेषविहितेनानेन सादेशस्य बाधादुक्तदोषस्य विरहेण न्यासं सुवचमेव मन्यामहे इत्यलम्।

(५१) केचित् तु 'इदमो मः' 'इदोऽयपुंसि' 'यःसौ' एतत्सूत्रत्रयस्थाने 'इदमोऽयमियमस्त्रियाम्' 'इदम इयमसावयमपुंसि' इति वा विन्यस्योभयत्र मकारेत्संज्ञापरित्राणार्थमुच्चारणार्थकाकारं कृत्वा सौ परे स्त्रियामियं विधानेन द्वितीये पुंसि अयं विधानेन मकारोच्चारणसामर्थ्यात् त्यदाद्यत्वबाधेन चावशिष्टयोः पुंलिङ्गनपुंसकयोर्द्वितीये स्त्रीलिङ्गनपुंसकयोश्च नपुंसके लुगादेशयोश्च प्राप्तयोर्लुकः प्राबल्येन प्रथमप्रवृत्तौ 'न लुमताङ्गस्य' इत्यनेन निषेधात् प्रत्ययलक्षणाभावेन सु-परत्वाभावादादेशाप्राप्त्या पुंलिङ्गे स्त्रीलिङ्गे चादेशस्य सत्त्वेनेष्टसिद्धिः। 'अनाप्यकः' इत्यत्रेदानीमिदोऽयपुंसीत्यस्याभावेनेदोऽनुवृत्त्यभावादिदम एवानुवृत्त्याऽर्थवत एवेदमः सम्भवात् 'नानर्थके' इति परिभाषाया अप्राप्त्याऽसर्वादेशस्यैवानादेशस्य विधानेन तस्य च हलन्तत्वादिष्टरूपं न स्यात् तदर्थम् 'अनाप्यकः' इत्यत्रानेत्यकारान्तं कृत्वा सर्वादेशेनानेनेत्यस्य आभ्यामित्यादौ हलि लोपस्यान्त्यादेशत्वेनानिष्टवारणाय 'हल्यशि' इति न्यासेन शित्त्वात् सर्वादेशत्वसम्पादनात् न्यासं सुवचमाहुस्तदपि न, यथान्यासे पुंसि साकच्कस्येदम इदोऽयादेशेऽयकम् स्त्रीलिङ्गे इयकमिति साम्प्रतं 'तन्मध्यपतित'-न्यायेन विशिष्टस्येदमशब्देन ग्रहणात् सर्वादेशेऽयमिति इयमिति च फलभेदादनिष्टापत्तेरलमायासेन।

(५२) 'न संयोगाद्वमन्तात्' अत्र 'न हलो वमात्' इत्येवास्तु हलः परौ यौ वकारमकारौ ताभ्यां परस्यानोऽकारस्य लोपो नेत्यर्थाद्यज्वनो ब्रह्मण इत्यादेः सिद्धौ किं संयोगादिग्रहणेनेति चेन्न, सिद्धान्तेऽप्यन्तग्रहणं स्पष्टार्थम्। वकारमकारयोः संयोगविशेषणत्वेन तदन्तलाभादिति शेखरोक्तेः। संयोग इत्यस्य संज्ञाशब्दत्वादर्धमात्रिकत्वेन लाघवाभावेन फलाभावात्, प्रत्युत सूत्रभेदापत्तिर्दोष एव। राजानं वनतीति राजवा-तान् राजवन इत्यत्रालोपापत्तेश्च, अत्र वकारस्य हलः परत्वाभावेन निषेधाप्रवृत्तेः। मम तु संयोगसंज्ञां प्रति संज्ञाविधित्वेन 'नलोपः सुप्' इति नलोपस्यासिद्धत्वेन संयोगसंज्ञायां निषेधः प्रवर्त्तते। यत् तु 'नलोपः सुप्' इति सूत्रे संयोगसंज्ञातिरिक्तसंज्ञाया ग्रहणमत एव 'इकोऽचि' इति सूत्रस्थाऽज्ग्रहणस्य 'न लुमताङ्गस्य' इत्यस्यानित्यत्वज्ञापकतोपपद्यते। अन्यथा हे वारिषुशय इत्यत्रालुकि नुमि नलोपेऽपि संयोगसंज्ञया पूर्वस्य गुरुत्वात् 'गुरोरनृत' इति प्लुतापत्तिरिति अज्ग्रहणं

तदर्थमावश्यकं स्यादिति तन्न, तत्र हलदन्तादित्येव नेह भूमिशय इति भाष्येऽस्याऽलुकस्तत्राप्रवृत्तेरुक्तविषयाभावात्, वस्तुतस्तु 'नलोपः सुप्' इत्यत्र घिसञ्ज्ञातिरिक्तसंज्ञाया अग्रहणादुक्तदोषाभावेन न्यासे पूर्वोक्तलाघवाभाव एवेति।

( ५३ ) 'पथिमथि' इति। नन्वत्र 'पथिमथ्यृभुक्षामत्' इत्येवास्तु अनेन नकारस्य ह्रस्वात्वे इकारस्यापि 'इतोऽत' इत्यत्वे दीर्घेण रूपसिद्धेः। न च 'अतो गुणे' इति पररूपापत्तिः। 'पथिमथ्यृभुक्षां लोपः' 'भस्य टेः' 'इतोऽत् सर्वनामस्थाने' इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्येनैव पररूपबाधादिति चेन्न। अनुनासिकवारणाय प्रश्लेषे दीर्घोच्चारणेन लाघवाभावात्। पररूपं तु न समस्तत्वेनान्तर्वर्त्तिविभक्त्या पदत्वेन पदान्तत्वात्। अन्ये तु क्यजन्तात् क्विपि पथ्या इत्यर्थमाद्विधानं 'वा छन्दसि' इत्यत्रानुवृत्त्यर्थं तेनैकारस्य वैकल्पिकाकारविधानार्थं च सार्थक्यमिति वदन्ति।

( ५४ ) 'भस्य टेर्लोपः' अत्र केचित् 'भाड्डित्' इत्येव सूत्रमस्तु भसंज्ञकात् पथ्यादेः परो यः प्रत्ययस्तस्य ङित्त्वातिदेशात् पथः पथेत्यादौ टेरित्येव सिद्धमुत्तरत्रानुवृत्त्यर्थमपि न लोपादिग्रहणं तदग्रे 'गोतो णित्' इत्यस्य दर्शनात् तत्रानुवृत्तेः फलाभावात् इति चेन्न ङित्त्वातिदेशे योग्यप्रत्ययस्येहानुपस्थितेर्भसंज्ञयाक्षेपेऽपि शाब्दबोधे भानासम्भवात् वृत्त्योपस्थापितस्यैव तत्र प्रवेशात्। किञ्च सुपथोऽपत्यं सौपथमित्यादौ 'टेः' इति लोपे आभीयतयाऽसिद्धत्वात् पुनष्टिलोपानापत्तेः। सिद्धान्ते 'भस्य टेः' इत्यस्य भसञ्ज्ञामात्रनिमित्तत्वेन 'नस्तद्धिते' 'टेः' इत्यस्य च प्रत्ययनिमित्तत्वेन समानाश्रयाभीयत्वाभावात् सुपयतीति णिच्यनापत्तेश्च यथान्यासे नित्यत्वादन्तरङ्गत्वात् प्रतिपदोक्तत्वाच्च 'भस्य टेः' इति लोपे नान्तत्वाभावात् 'नस्तद्धिते' इत्यस्याप्राप्त्या 'टेः' इत्यनेन पुनष्टिलोपेनेष्टसिद्धिः। ननु प्रथमटिलोपे 'प्रकृत्यैकाच्' इति प्रकृतिभावः स्यादुपसर्गसमानाकारस्य पृथक्करणात्। परमशब्दसमवधाने तु 'ऋक्पूः' इत्यप्रत्ययापत्तिरिति चेदेवमपि परमपथिन्शब्द परमादौ परमयतीत्यसिद्धेः। सुपथिन्-शब्दादिष्ठनि 'भस्य टेर्लोपः' इति लोपे पुनरिष्ठनि 'टेः' इति लोपे सुपिष्ठ इति एकन्यासे आभीयत्वेनासिद्धत्वात् सुपथिष्ठ इत्यपि बोध्यम्।

(५५) 'वेरपृक्तस्य'। इदं सूत्रं न कर्त्तव्यं क्विप्-विच्-क्विन्-
विण्-इत्यादिप्रसङ्गे क्विप्-इच्-क्विन्-इण्-इत्यादि पठित्वैव साम-
ञ्जस्येऽधिकस्य फलाभावात्। ननु कण्डूय इति क्यजन्तात् क्विप्यल्लो-
पयलोपयोः कण्डूरित्यादौ वल्परत्वाभावाद्यलोपो न स्यादिति चेन्न
'लोपो व्योः क्विनिच्क्विविण्वल्षु' इति न्यासेन यवयोर्लोपस्य सुवच-
त्वात्। तथा च 'वेरपृक्तस्य' 'अपृक्त एकाल्प्रत्ययः' इति 'हल्ङ्याब्भ्यो
दीर्घात्' इत्यत्रापृक्तग्रहणं च 'लोपात् पूर्वं वलि लोपः' इति वार्त्तिकं च
न कार्यमिति महल्लाघवम्। हल्ङ्यादिसूत्रस्थेभ्यः परः सुतीसीत्येत-
द्धल्रूपं लुप्यत इत्यर्थेनैव भिनत्तीत्यादौ न दोषः। 'अस्तिसिचोऽपृक्ते'
इत्यत्रापि 'अस्तिसिचः पिति' इति पठित्वा तस्मात् परस्य हल्रूपस्य
पित इडित्यर्थेनादोषादपृक्तग्रहणं हेयमेव। एवं सर्वत्र निर्वाहे
न्यासः सुवच एव प्रतिभाति।

(५६) 'समः समि' अत्र 'समो मिङ्' इति। 'सम इक्' इति
वाऽस्तु। ङित्त्वेत्यन्त्यादेशेन 'आद्यन्तौ टकितौ' इति परावयवत्वेन वा
यणि सम्यङित्यादि दीर्घे समीच इत्यादौ चेष्टसिद्धेरिति चेन्न परि-
भाषाज्ञानकृतगौरवापत्तेरिति केचित्। अत्र ङकारककारयोरित्संज्ञा,
'अनेकाल् शित्' इत्येतद्बाधकं 'ङिच्च' इति 'आद्यन्तौ' इत्यादि बहूना-
माश्रयणमिति तदाशयः। समोऽव्ययत्वेन ततोऽकचि पदद्वित्वे वा
'तन्मध्यपतित'-न्यायेन स्थानिवत्त्वेन वा विशिष्टस्य समग्रहणेन
ग्रहणात् सर्वादेशे सम्यङिति न्यासे ङित्त्वेत्यन्त्यादेशे समक्यङिति फ-
लभेदस्य स्पष्टत्वादिति परे तन्न-अस्य समुदायादेशफलत्वेन भाष्येऽ-
नुक्तत्वात् यत्र कुत्सादिविवक्षा तत्र प्रथममुत्तरपदनिमित्तकादेशस्त-
तोऽकजिति स्वीकारात्। किञ्चोत्तरपदार्थे प्रकर्षप्रतिपादके एतादृशे
कुत्सादिविवक्षैव न सम्भवति पदद्वित्वं चार्थविशेषे प्रयोगविशेष एवेति
भाष्यप्रामाण्यान्न तत्रास्य विषय इति शम्।

(५७) 'तिरसस्तिर्यलोपे' नन्वत्राकारस्य प्रश्लेषे मानाभावात्
तथा सत्यपि सकारध्वादित्वं कल्प्यं तस्मादस्य लोपोऽस्मिन्नित्यलोपस्त-
स्मिन्नलोपेऽञ्चतावित्यर्थेन तिरश्चेत्यादावेव तिर्यादेशो न तिर्यङ्ङा-
दाविति चेन्न यद्येवमेवेष्टं तर्हि चावित्यस्यानन्तरं 'तिरसस्तिरि'
इत्येव सूत्रमस्तु तावतैवोक्तार्थस्य लाभात्। यदि न लोपोऽस्मिन्नि-
त्यलोपस्तस्मिन् लोपाभाववत्यञ्चतावित्यर्थस्तथापि गत्यर्थे नलोपस्य

सत्त्वेन पूजार्थ एवस्यादेवं च तत्सम्पादनाय 'तिरसस्तिर्यगतौ' इत्येव विन्यसेत् । यद्यस्मिन् समासेऽन्यपदार्थे-आधारार्थिका सप्तमी आधारत्वं चौपश्लेषिकत्वेन सामीप्यमेव तथा च लोपाभावो यत्राञ्चतिर्नापि प्रत्ययेन तिर्यञ्चावित्यादौ क्विनो लुप्तत्वात् सूत्राप्राप्त्या तिर्यञ्चितवानि-त्यादावेवेति चेत् 'विष्वग्देवयोः' इत्यतोऽप्रत्यय इत्यनुवर्त्तमाने विद्य-मानप्रत्यये इत्यर्थात् सूत्रस्यैव वैयर्थ्यात् । न चात्र 'तिरसस्तिर्य' इति न्यासं विधाय 'विष्वग्देवयोः' इत्यस्मादञ्चतावित्यस्यानुवृत्त्या 'यस्मिन् विधिः' इति तदादिविधावकारादावञ्चतौ परे इत्यर्थात् तिरश्चे-त्यादौ नोक्तदोष इति वाच्यम् । प्रसुचेपण इति क्विबन्तस्याञ्चतिनाऽ समञ्चतीति विग्रहे उपपदसमासे सकारस्य रुत्वे उत्वे गुणे पररूपे चोङिति तिरि ओङ् तिर्योङित्यत्राकाराद्यञ्चतिपरत्वाभावात् तिर्या-देशो न स्यात् । यद्येतदर्थं 'तिरसस्तिर्यचि' इति न्यासः अजादाव-ञ्चतावित्यर्थस्तथा च नोक्तातिप्रसङ्ग इति चेत् न अञ्चतीति विग्रहे उपपदसमासे नुटि 'विनापि प्रत्ययं' पूर्वपदस्य नञो लोपे नाङिति तस्य तिरस्शब्देन योगेऽजाद्यञ्चति परत्वाभावात् तिर्यादेशो न स्यात् 'यदागम'-परिभाषयाऽप्यजादित्वस्यालाभात् । अन्यथा षण्णामित्यत्रो-क्तपरिभाषया तत्त्वेन ष्टुत्वस्यैवाप्राप्त्या तत्प्रतिषेधे 'न पदान्ताट्टोः' इ-त्यत्रानामग्रहणस्य वैयर्थ्यापत्तेः । यत्तु तिरश्च इत्यत्र तिरसोऽञ्चतिना समासोत्तरं सुब्लुकि बहिर्भूतविभक्तिनिमित्तकभसंज्ञाद्याकारलो-पापेक्षान्तरङ्गतिर्यादेशापत्तिस्तत्र प्रत्यङित्यादौ यण्वारणार्थं न चौ प्रत्ययमस्तीत्युक्त्याऽन्तरङ्गस्य पूर्वप्रवृत्त्ययोगात् । न च तत्र सर्वत्र यणा-द्यादेशे 'चौ' इत्यस्य वैयर्थ्येन तथा कल्पनस्य सत्त्वे प्यत्र कल्पनायां मानाभावेन दोषस्तदवस्थ इति चेत् तथाऽपि पदसंस्कारपक्षेऽनौपाधिकं कृत्वा पश्चात् तिरसः समवधाने दोषाभावात् । अत एवालोपोत्तरमच-स्थानिवत्त्वेनापि न पूर्वत्वेन दृष्टत्वाभावादिति भ्रम् ।

(५८) 'अदस औ सुलोपश्च' अत्र विभक्तिविपरिणामक्लेशाभा-वात् पदलाघवाच्च 'अदसः सोडौ' इत्येवास्तु । वस्तुतोऽदस इति पञ्च-म्या साविति सप्तम्या अपि षष्ठ्यन्तत्वपरिकल्पनया सोरेव डौ स्या-दिति वाच्यम् । नित्यत्वात् प्रथमतष्टिलोपे कृते सत्त्वात्त्वयोः प्राप्तयोः सत्त्वं बाधित्वा नित्यत्वात् त्यदाद्यत्वेऽसावित्यस्यैवासिद्धेरिति केचित् तदयुक्तम्, सत्यपि सम्भवे बाधनमिति भाष्येण डावादेशस्त्यदाद्यत्वा-

पवादस्तथा च टिलोपापेक्षया परत्वात् सत्वे 'पुनः प्रसङ्गविज्ञानाट्टि-लोपेऽसावित्यस्य सिद्धत्वात् । सकृद्गतिन्यायाङ्गीकारे तु टिलोपे नित्यत्वात् सत्वे कृते तदोरिति सूत्रे—'सकृद्गति'-न्यायेनादस इति विभक्तिसत्वविधायकानियमेन भाष्येऽन्त्यग्रहणप्रत्याख्यानेन सत्वासिद्ध्याऽदोषात् ।

( ५९ ) 'न मु ने' अत्र 'नो नः' इत्येवास्तु । नाभावे कर्त्तव्ये कृते चोभावो नासिद्ध इति तस्यार्थः । मत्वस्यासिद्धत्वेऽपि दोषाभावादिति चेदुच्यते भद्रं करोषि पटउ अरिणा गम्यत इत्यत्रासिद्धकाण्डस्थस्याप्युत्वस्य सिद्धतया 'इको यणचि' इति यणापत्तेः । तथा हि भद्रं करोषि पटो इति स्थिते तत्र 'एचोऽप्रगृह्यस्य दूराद्धूते पूर्वस्यार्धस्योत्तरस्येदुतौ, अप्रगृह्यस्यैचो दूराद्धूते प्लुतविषये पूर्वस्याकारः प्लुतः स्यादुत्तरस्य त्वर्धस्य क्रमादिकारोकारौ स्तः । अनेन ओकार घटकस्य पूर्वस्याकारस्य प्लुते कृतेऽर्धस्य उकारांशस्य उकारे च कृतेऽरिणेत्यत्र नाभावे च कृते उकारस्य यणि कर्त्तव्ये 'नो न' इति निषेधेनोत्वस्य सिद्धत्वेन यणादेशो दुर्वारः । यथान्यासे तूत्वस्य सत्वेऽपि मुत्वाभावात् न सिद्धताबोधनमित्यसिद्धत्वेन नातिप्रसङ्गः । न च प्रत्यासत्तिन्यायेन नाभावे कृते नाभावनिमित्तककार्ये एव सिद्धत्वमिति वाच्यम् । भद्रं करोषि पटउ इति वेदवाक्यस्यानुकरणे समुदायस्य प्रातिपदिकत्वे टाविभक्तौ 'आङो ना' इति नाभाव कर्त्तव्ये उभावस्य सिद्धत्वेन नाभावापत्तेः । न चानुकरणस्यानुकार्यभिन्नत्वात् नायमुकारोऽसिद्धकाण्डस्थविहित इति वाच्यम् । 'प्रकृतिवदनुकरणम्' इत्यतिदेशेनानुकरणघटकस्याप्युकारस्य तच्छास्त्रविहितत्वात् । कथमन्यथा त्वेरायो मेराय इत्यस्यानुकरणत्वे मे इत्यत्र 'मे' इत्येतत्सूत्रस्थप्रगृह्यत्वमिति दोषस्तदवस्थ एवेति यथान्यासमेव रमणीयम् । यत् त्वत्रैव 'न मुटि' इति न्यासमाहुस्तदसत् अमुयेत्यस्यासिद्ध्यापत्तेः । अदस्शब्दात् टाविभक्तौ त्यदाद्यत्त्वे पररूपत्वे टापि अदा आ इति दशायामुत्वस्यासिद्धत्वात् 'आङि चापः' इत्येत्वेऽयादेशे मुत्वं च सिद्ध्यति न्यासे टायां मुभावस्य सिद्धत्वादेत्वात् प्रथमं परत्वान्मुत्वेऽनिष्टापत्तेरिति ।

( ६० ) 'जानपदकुण्डगोण' अत्र सूत्रे वर्णग्रहणं कालग्रहणं च मास्तु. 'वर्णादनुदात्तात्' इत्यस्यानन्तरं कालादिति पाठ्यं तत्र 'वर्णादनुदात्तात्' इत्यतः कश्चिदेकदेशोऽप्यनुवर्त्तते इति वर्णादित्यस्यानु-

वृत्त्या वर्णरूपार्थे ङीषि कालीति। अन्यत्र क्रौर्यादिगुणवति टापि कालेनि रूपद्वयसिद्धौ न किमपि दूषणम् न च जानपदसूत्रेण ङीष् अनेन ङीप् भवतीत्यनुदात्तः स्यात् कालशब्दस्यान्तोदात्तत्वेनोदात्तस्वरेण ङीषङीपोः स्वरे विशेषाभावात्। यत् तु 'जानपद' सूत्रे वर्णग्रहणसामर्थ्याद्वर्णविशेष्यकबोधे एव कालीति तदिदानीं न सिद्ध्येत्, तदपि न, अन्यत्रापि ङीषापत्तावनुवर्त्तमानवर्णादित्यस्यैव वैयर्थ्येनोक्तार्थज्ञापकत्वेनादोषात्। न च 'गुणे शुक्लादयः पुंसि' इति कोषाद्वर्णमात्रपरककालशब्दस्य स्त्रीत्वमेव न सम्भवतीति जानपदसूत्रोक्तवर्णशब्दस्यार्शआद्यजन्तत्वेन शिखरे गुणवत्परत्वोक्त्या यथास्थितन्यासेऽपि वर्णमात्रार्थे प्रयोग एव नेति चेत् स्त्रीत्वसम्पत्तये तद्वत्परत्वेऽपि वर्णग्रहणसामर्थ्याद्वर्णविशेष्यकबोधे उक्तप्रयोगस्योक्तौ विरोधाभावात्। तस्य चोभयप्रकारेण सिद्धत्वात् अन्ये तु 'जानपद'-सूत्रे वर्णग्रहणं कालशब्दात् 'पुंयोगात्' इति प्राप्तङीष्निवृत्त्यर्थमन्यथोक्तसूत्रे कालादित्यस्य पाठादुक्तवैयर्थ्यं स्पष्टमेवेति वदन्ति। परे तु वर्णग्रहणस्य 'मात्रागौरवात् पदगौरवम्' इति न्यायज्ञापकत्वेन न पुंयोगे ङीष्बाधकता पुंयोगलक्षणङीष् तु कालीत्यत्र भवत्येवेति वर्णग्रहणस्य न्यायज्ञापनार्थमावश्यकत्वेन न चाशङ्का न चोत्तरमिति वदन्ति।

(६१) 'लक्षणेत्थम्' इति अत्र सूत्रे योगत्रयं कर्त्तव्यं तत्र 'भागे प्रतिपर्य्यनवः' इत्येको योगः। ततो 'लक्षणेत्थम्भूताख्यानवीप्सासु' तदग्रे 'अभिः'। तृतीययोगे सान्निध्याद्योगविभागाद्वा द्वितीययोगस्य सम्पूर्णस्य सम्बन्धो न तु प्रथमयोगाङ्गान इत्यत्र तथा च भागवर्जितलक्षणादावेवाभिः संज्ञेति कृत्वा सकलेष्टसिद्धौ 'अभिरभागे इत्यत्राभागग्रहणाकरणलाघवमिति ध्येयम्।

(६२) 'सुपो धातुप्रातिपदिकयोः' अत्र 'सुपोऽङ्गस्य' इत्येव सुवचम्। राजपुरुष इत्यादौ राजन् ङस् पुरुष सु इत्यवस्थायां विशिष्टस्य समासेन प्रातिपदिकसंज्ञायां यद्यपि तद्घटकविभक्तेरङ्गावयवत्वं नास्ति तथापि समुदायप्रकृतिकविभक्तौ समस्तस्य विभक्तिविशिष्टस्याङ्गत्वेन दोषाभावात्। एवं पुत्रीयतीत्यादौ द्वितीयान्तात् क्यचि तद्विकृविताङ्गत्वस्य द्वितीयान्ते सत्त्वेन दोषाभावो बोध्यः। न च परमसर्वस्मै इत्यत्र परम सु सर्वसु इत्यवस्थायां विशिष्टाद्विहितस्य ङेविभक्तेःसर्वनाम्नो विहितत्वाभावेन स्मै न स्यादिति वाच्यम्। विभक्तिलुकि विभक्तेः

सर्वनाम्नः परत्वेन सर्वनाम्नः परस्येत्यर्थेनादोषात्। न चैवं सति वर्णा-
श्रमेतराणामित्यत्र 'द्वन्द्वे च' इति समुदायस्य संज्ञानिषेधेऽवयवस्य
निषेधाभावेन ततोऽपि परत्वेन विभक्तेः स्मै-स्मि-सुडादयः स्युः। 'द्वन्द्वे
च' इत्यत्र प्रथमार्थकमौत्रीं सप्तमीं हित्वा वास्तविकसप्तम्यामेव तस्या
षष्ठ्यर्थकत्वं स्वीकृत्य समुदायस्येवावयवस्यापि सर्वनामसंज्ञानिषेधेन
वर्णाश्रमेतराणामित्यादौ सर्वनाम्नः परत्वाभावेनादोषात्। परमसर्वस्मै
इत्यादौ तत्परत्वस्य सत्त्वेन चानिर्वाहात्। न चैवमितरशब्दस्य चश-
ब्देन समासे विशिष्टस्य प्रातिपदिकत्वे 'अन्तरङ्गानपि' इति न्यायेन
सुब्लुकि अकारद्वयोर्दीर्घः सुबुत्पत्तिश्च प्राप्ता तत्र पूर्वस्थितनिमित्तकत्वे-
नान्तरङ्गत्वात् सुबुत्पत्तिस्ततो दीर्घस्तथा च समुदायप्रकृतिकविभक्तेः
सर्वनाम्नो विहितत्वाभावात्स्मायादयो न भवन्ति विहितपक्षस्यभावे दो-
र्घोत्तरं पूर्वान्तत्वेन सर्वनाम्नः परत्वात् स्युरित्यपि न 'अचः परस्मिन्'
इति पञ्चमीसमासैकादेशस्य स्थानिवत्त्वेन तत्परत्वाभावात्। हे सर्वाथ
नम इत्यत्राप्युक्तयुक्त्या स्थानिवद्भावेन समाधातुं शक्यत्वात्। न च वस्तु-
तः सिद्धान्तेऽवयवस्यानिषेधेनाकजर्थं संज्ञाऽऽवश्यिका तथा च विशेष्य-
विशेषणभाव वर्णाश्रमेतराणामित्यादौ दूषणं दुरुद्धरमित्यपि न विशे-
षणविशेष्यभावस्य कामचारत्वाददन्तसर्वनामरूपाङ्गात् परस्य जसादेः
इत्यादय इत्यर्थेनादोषात्। यत्तु परमहरिभ्यामित्यादौ परम आ हरि
भ्यो इत्यवस्थायां समासे समुदायात् भ्यामि पूर्वस्याङ्गसंज्ञायां सुब्लोपे
भ्याम्सत्त्वाधीनाङ्गसंज्ञा तदधीनो विभक्तिलोप इति सो विभक्तिलोपो
भ्यान्निमित्तकस्तथा च 'अचः परस्मिन्, इति औकारस्य स्थानिवत्त्वेन
तस्मिन् परे हरेरिकारस्य यणापत्तेः। मम तु प्रातिपदिकसंज्ञायां भ्यामो
ऽनपेक्षणात् न भ्यान्निमित्तकत्वं लोपस्येति न दोष इत्यपि न परमश्च
हरिश्च इत्यस्य कर्मधारये परमहरिरिति तस्यैकशेषे भ्यामुक्तदोषाभा-
वात्। 'अचः परस्मिन्' इत्यत्र निमित्तपदेन सप्तम्यन्तस्य ग्रहणेनाऽवय-
वस्य लोपेऽप्यस्यातथात्वाच्च। यत्तु 'ओतो णित्' इत्यत्र हे भानो हे
भानव इत्याद्यर्थं विहितविशेषणस्यावश्यकत्वेन बहुगौरतिगौरित्यादौ
समासे विभक्तिविशिष्टस्य प्रातिपदिकत्वे समुदायोत्पन्नविभक्त्याङ्गत्वेन
सुब्लुकि तत्र सर्वनामस्थानस्योकारान्ताद्विहितत्वाभावेन णित्त्वाना-
पत्तेः। मम तु विभक्तिलोपात्पश्चाद्विभक्तेर्विहितत्वेन न क्षतिरिति
तत्र, ओकारान्तात् पर इत्यर्थेनैवादोषात्। हे भानो इत्यत्र 'सम्बुद्धौ शाक-

ल्पस्य' इति सूत्रसामर्थ्यादवैदिक इति परे न णित्वमिति कल्पनयैवा-दोषात्। हे भानव इत्यत्रापि' अतोऽमिति सूत्रभाष्योक्तेन 'द्योः सर्वनामस्थाने णित्वं वक्तव्यम्' इति वार्त्तिकेन 'द्यौश्च वृद्धिर्वक्तव्या' इति 'गोतः' सूत्रस्थवार्त्तिकेन च 'गोतो णित्' इत्यत्र तपरकरणेन गकारस्य विवक्षितत्वेन वाऽन्योकारान्तानामनभिधानादेव न दोषः। न च गकारस्य विवक्षायां चित्रगुरित्यत्र सिद्धान्तेऽप्यङ्गाधिकारात् तदन्तविधौ स्थानिवत्त्वेन गोन्तत्वाण्णित्वापत्तिः। वार्त्तिकमते ओकारान्तत्वाभावादनल्विधाविति निषेधाच्चेति वाच्यम् 'गोः पूर्वत्वेणित्वात्त्वस्वरेषु स्थानिवत्त्वप्रतिषेधो वक्तव्य' इति वार्त्तिकेनैव सिद्धेः। हे चित्रगोरित्यत्र तु लाक्षणिकत्वादेव नेति प्रकृतसूत्रे भाष्ये स्फुटम्। एवं चोक्तयुक्त्या 'न हि पदान्तादेङः सन्ति, इति भाष्याच्च स्मृतौ इत्यादीनामनभिधानात् लाक्षणिकत्वेन वा 'लक्षणप्रतिपदोक्त' परिभाषया वारणाच्च नात्र विहितविशेषणे किञ्चित् फलम्। न च 'सप्तम्यास्त्रल्' इत्यत्र सिद्धान्ते सर्वनामप्रकृतिका या सप्तमी तदन्तात् त्रलित्यर्थात् सर्वत्र परमसर्वत्रेत्यत्र तत्सिद्धिरतिसर्वस्मिन्नित्यत्र न' इदानीं परमसर्वत्रेत्यादौ सुबन्तसमुदायाद्विहितसप्तम्याः सर्वनामप्रकृतित्वाभावात् त्रल् न स्यादिति वाच्यम्। अङ्गावयवविभक्तेर्लुकि समुदायविहितस्यास्तस्याः सर्वनाम्नः परत्वेन सर्वनाम्नः परा या सप्तमी तदन्तात् त्रलित्येवमेवार्थेनोक्तदोषाभावादिति यत् तदपि न वर्णाश्रमेतरेष्वित्यत्र समुदायस्य निषेधेऽप्यवयवस्य संज्ञात्वेन सप्तम्यास्तत्परत्वेन तदापत्तेः, सर्वनामार्थगतसंख्याभिधायिसप्तम्यन्तादित्यर्थेऽपि सर्वस्मिन् घट इत्यादौ घटपदोत्तरसप्तम्याः सर्वार्थगतसंख्याभिधायित्वात् त्रलापत्तेः। तद्वारणाय सर्वनामाव्यवहितोत्तरतदर्थगतसंख्याभिधायिसप्तम्यन्तादित्यर्थेन वर्णाश्रमेतरेष्वित्यत्र तदुत्तरत्वेऽपि तदर्थगतसंख्याभिधायित्वाभावेन घटपदोत्तरसप्तम्याः सर्वनामाव्यवहितोत्तरत्वाभावेन च नोक्तदोषः। एवं प्रियषष इत्यादिव्यावृत्तये परमषडित्यादि सिद्धये च बोध्यमिति शम्।

(६३) 'प्रक्तियष्व्योरीकक्'। यत् त्वत्र सूत्रे 'नञ्स्नञ्' इति वार्त्तिके च इकक्' इति ह्रस्वघटितमेवास्तु मास्तु दीर्घोच्चारणं सवर्णदीर्घेण रूपसिद्धेः। ननु प्राक्तीकः प्राक्तीकीत्यादौ 'यस्येति' लोपे न रूपासिद्धिः। तथा सति कक् इत्येव विधातव्ये इकारविधानसा-

सामर्थ्यादेव लोपं बाधित्वा दीर्घसिद्धेरिति तन्न कर्कशब्दात् 'कर्कलोहितादीकक्' इतीकक्कि 'यस्येति' लोपे वार्त्तिकेन ङीपि कार्कीकी पुंसि कार्कीक इति भवति ह्रस्वविधाने 'यस्येति च' इति लोपे तन्न सिद्ध्येदतस्तत्र ङीबर्थमत्र दीर्घश्रवणार्थं चावश्यकं दीर्घोच्चारणमिति केचित्। ईकक् विधायकेषु सर्वत्र ह्रस्वघटितम् 'इ कक्' इति न्यासंविधायान्त्यस्येकारादेशः कक् प्रत्ययश्च तेन विधेयो 'बले च' इति सूत्रेऽपि ककूग्रहणं कर्त्तव्यम्, कक्ति परेऽपि दीर्घ इति तदर्थः। 'नञ्स्नञ्' इति वार्त्तिकेऽपि कगित्येव पाठ्यम्, तथा च शाक्तीक इत्यादीनां 'बले च' इति दीर्घेण स्त्रीत्वविवक्षायां ककूघटितेन 'नञ्स्नञ्' इति वार्त्तिकेन ङीपा चेष्टसिद्धेरित्यन्ये। एतत् सर्वमसङ्गतं 'वुञ्छण्' इति विहितककोऽपि वार्त्तिके 'बले च' इति सूत्रे च ग्रहणात् वाराहिकेत्यत्र ङीब्दीर्घयोर्वाराहक इत्यत्र दीर्घस्य चापत्तेरिति यत्तदपि न, 'वुञ्छण्' इति विहिते कक्यनुनासिकेकाररूपानुबन्धस्यादावासञ्जनेन 'तदनुबन्धक' इति परिभाषया तस्याग्रहणेनादोषात्। सर्वत्र पूर्ववत् टिकक्विधानेन 'बले च' इत्यत्र टिककूग्रहणेन च ङीब्दीर्घादिसिद्धौ 'वुञ्छण्' इति विहिते टित्वाभावेन तयोरप्राप्त्या च सकलेष्टसिद्धौ वार्त्तिके ईकग्ग्रहणाकरणलाघवमपीति परे। ईकग्विधायकेषु सर्वत्र टीकक्करणात् 'वुञ्छण्' इत्यत्र यथाश्रुतमेव स्त्रीत्वविवक्षायां टित्वाद् ङीपि रूपसिद्धौ 'नञ्स्नञ्' इति वार्त्तिके ईकगिति मास्त्वितीतरे।

(६४) 'सार्वधातुकार्धधातुकयोः'। अत्र 'पिदार्धधातुकयोः' इति न्यासोऽस्तु। पित्यार्धधातुके च परे इगन्ताङ्गस्य गुणो भवतीति तस्यार्थः। न च हरिषु भानुष्वित्यत्र पिति सुपि गुणः स्यादिति वाच्यम्। आर्धधातुकसाहचर्यात् पितोऽपि धातुविहितस्यैव ग्रहणेनादोषात्। एवमपि लूषु भूष्वित्यादौ धातुविहितस्यैव तस्य सम्भवात् दोषतादवस्थ्यमिति चेत् धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयस्यैव तस्य साहचर्येण ग्रहणात्। अत्र सुब्निष्ठविधेयतानिरूपितोद्देश्यताया धातुत्वावच्छिन्नत्वाभावात्। यत्त्वेवं न्यासे पिद्भिन्ने तसादौ गुणाप्राप्त्या तत्र गुणनिषेधाय ङिद्वद्भावार्थं 'सार्वधातुकमपित्' इत्यपि न कर्त्तव्यमिति तन्न उष्ट इत्यादौ सम्प्रसारणाद्यर्थं ङित्त्वातिदेशस्यावश्यकत्वात्। वस्तुतस्तु 'साहचर्य' परिभाषाया अनित्यत्वज्ञापनार्थमेव सार्वधातुकग्रहणम् तेन 'सिजभ्यस्त' इत्यत्र विदा-

दिसादृश्यात् सिचो धातोर्न ग्रहणं किन्तु विकरणस्यैवेत्यलम् ॥ १ ॥
अत्रैव 'धातोः' इत्येव न्यासोऽस्त्विति केचित् । 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति न्यायेन सार्वधातुकार्धधातुकयोरेव स्यात् । न च 'तनादिकृञ्भ्य उः' इत्येतद्विहितोकारस्य धात्ववयवत्वाभावात् तनोति करोतीत्यादावुकारस्य गुणो न स्यादिति वाच्यम् । तेनाप्युगेव प्रत्ययो ह्यागमो वास्तु 'यदागम'-परिभाषया तनु कुर्वित्यादीनां धातुत्वेन तिबादौ गुणविधानेनादोषात् । न चोकः कित्त्वात् तस्मिन् परे पूर्वस्य गुणनिषेधः शङ्क्यः 'अत उत् सार्वधातुके' इति कृञोऽकारस्योकारविधानादत्र निषेधाप्रवृत्तेः । अत एव 'नित्यं करोतेः' इति निर्देशः संगच्छते । एवं स्वादिभ्योऽपि श्नुगेवास्तु तदन्तस्य धातुत्वादुवङा सिद्धमिति 'अचिश्नु' इत्यत्र श्नुग्रहणमपि न कार्यम् । न चाकुर्वन्नित्यत्रोप्रत्ययान्तस्य धातुत्वादुवङापत्तिर्दुर्वारेति वाच्यम् । 'अचिश्नु' इति सूत्रे श्नुगित्युक्त्वा धातुत्वादेव सिद्धौ श्नुग्रहणसामर्थ्यात् प्रत्ययान्तस्य धातोरुवङ् चेत् श्नुप्रत्ययान्तस्यैवेति नियमेन वारणसम्भवादिति तन्न 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति न्यायस्य धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्य एव प्रवृत्तेः 'धातोः' इति न्यासे तद्विषयाभावात् । अत एव 'नभूसुधियोः' इत्यत्र सुप्यपीयङादिनिर्देशः संगच्छत इति शम् । २ ।

( ६५ ) 'अतो दीर्घो यञि' । अत्र 'पावा' इति न्यासोऽस्तु । अत्र लुप्तषष्ठ्यन्ताकारोऽपि प्रश्लिष्टस्तस्य विधेयभूतदीर्घाकारेण दीर्घनिर्देशस्तथा च पवर्गाव्यवहितपूर्वस्यादन्ताङ्गस्याकारो भवतीत्यर्थः । तावतैव रामाभ्यां भवामीत्यादाविष्टसिद्धिः । रामायेत्याद्यर्थं 'ङेर्यः' इत्यत्र 'ङेरयङ्' इति न्यासेनाकारविधानसामर्थ्याद्दीर्घेणेष्टसिद्धिः 'सुपि च' इति सूत्राकरणलाघवं च । प्रत्यासत्त्या यदङ्गावयवस्यातो दीर्घस्तदङ्गसंज्ञानिमित्तकप्रत्ययावयवपवर्गे इत्यर्थात् भो देवदत्त पचति यज्ञदत्त इत्यादौ देवदत्तोत्तराकारस्य पचावयवपकारे परे न दोष इति केचित् । अत्र विधेयाकारे तपरत्वमावश्यकमतो यथान्यासे 'अ आ' इति वक्तव्ये दीर्घग्रहणं दीर्घ एव यथास्यान्न तु तस्य प्लुतादिविकारस्तेनापाचोदोदनं देवदत्त ननु पचामि भोरित्यादावनन्त्यस्यापि चकारोत्तरदीर्घाकारादेः 'प्रश्नाख्यानयोः' इति प्लुतः स्यादित्यन्ये । इतरे तु 'अत आत्' इति सुवचम् तपरकरणसामर्थ्याद्विकारनिवृत्तिरिति

प्लुतस्याप्रसङ्ग इति ताभ्यां न विरोधः । सार्वधातुकपदाननुवृत्तौ सारसायनभक्तश्चिकित्सकपास इत्यादौ दीर्घप्रत्याऽनुवृत्तेरावश्यकत्वे तु 'सुपि च' इत्यस्याकरणरूपलाघवस्याभावात् यञ्दीर्घशब्दयोः संज्ञाशब्दत्वेन चार्धमातृकत्वात् लाघवाभावादिति परे । यत् तु 'शरादीनाञ्च' इत्यत्रादन्तशरादिपाठसामर्थ्यात् । तद्धिते परे नानेन दीर्घ इति ज्ञापनेन सारसायनभक्त इत्यादौ दोषाभावेन सार्वधातुकानुवृत्तेरनावश्यकतया न्यासं सुवचं वदन्ति तदपि न शारीवतीत्याद्यर्थं शरादिपाठस्यावश्यकत्वेनोक्तार्थे ज्ञापकाभावादनुवृत्तेरावश्यकतया सुपि दीर्घार्थं 'सुपि च' इत्यस्यावश्यकत्वेन लाघवाभावाद्भवावो भविष्याव इत्यादौ प्रत्ययवकारस्य पवर्गत्वाभावेन दीर्घाप्राप्त्या दोषाच्चेत्यलम् ॥ १ ॥ -

यत् त्वत्र सूत्रे दीर्घग्रहणं मास्तु सूत्रं च 'अङ्गार्ग्यगालवयोः' इत्यनन्तरं पाठ्यं पूर्वसूत्रादटोऽनुवृत्त्या भवामि भविष्यामीत्यादौ यञादिसार्वधातुकस्याडागमे दीर्घेण रूपसिद्धिः । न च पररूपापत्तिविधानसामर्थ्याद्दीर्घ इति न कोऽपि दोषस्तत्र 'सुपि च' इत्यत्रैत एव दीर्घपदस्यानुवृत्तिस्तत्रापीदानीमटोऽनुवृत्त्याऽऽभ्यानेभिरित्यादौ भ्यामादीनामडागमेऽजादित्वेन 'हलि लोपः' इति लोपानापत्तेः 'अनाप्यकः' इत्यनादेशापत्तेश्च । यद्यपि तत्र 'अनटौसोरकः' 'आपि लोपः' इति न्यासेन निर्वाहेऽपि अधुक्षावहीत्यादौ वहेरडागमेऽजादिप्रत्यये क्सो लोपेन तदसिद्धेः । यदपि निर्जराभ्यामित्यादावडागमे जरसादेशापत्तिरिति तत् निर्जरैरिति भवितव्यं 'सन्निपातपरिभाषया' इति भाष्यादेव तुच्छमिति ध्येयम् ॥ २ ॥

(६६) 'पुगन्तलघूपधस्य च' अत्र लघुग्रहणरहितमेव न्यासोऽस्तु । न च लघुग्रहणाभावे धूपायतीत्यादौ दीर्घोपधस्यापि गुणः स्यादिति वाच्यम् । पुगन्तग्रहणसामर्थ्याद्दीर्घोपधस्य चेत् पुगन्तस्यैवेति नियमेनादोषात् । तथा हि सिद्धान्ते पुगन्तग्रहणं दीर्घोपधस्य पुगन्तस्य गुणविधानाय लघूपधपुगन्ते तु लघूपधत्वादेव सिद्धेर्लघुग्रहणाभावे तदैयर्थ्यस्य स्पष्टतया नियामकता युक्तैव । लघूपधस्य चेत् पुगन्तस्यैवेति विपरीतनियमस्तु न 'इको झल्' इति सूत्रसामर्थ्यात् । तथा ह्येतद्विहितकित्त्वस्य गुणनिषेध एव फलमिदानीं गुणस्याप्राप्त्या वैयर्थ्येनोक्तनियमवारकत्वेनैव सार्थक्यात् तस्य तितृक्षतीत्यादौ नलोपविधा-

नेन चारितार्थ्ये तु 'लिङ्सिचावात्मनेपदेषु' इति सूत्रस्य क्नोः कित्वस्य चोक्तार्थज्ञापकत्वात् । यत् तु सिद्धान्ते 'सार्वधातुकार्धधातुकयोः' इत्यस्य पुगन्तांशेऽन्वयेनाख्यानख्यन्तस्थले गुणो भवत्येतद्बोधनायैव लघुग्रहणं तन्न तदसम्बन्धे गुणस्येष्टौ च प्रमाणाभावेनोक्तज्ञापकताया हेयत्वात् । पुगन्तस्य चेद्दीर्घोपधस्यैव पुगन्तस्य चेल्लघूपधस्यैवेति पूर्वोक्तविपरीतनियमस्य च व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्य-व्यर्थशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वाभावेन नियमत्वायोगात् 'स्नुषाश्वश्रू' न्यायेन स्वांशे चारितार्थ्याभावाच्च । वस्तुतस्तु सर्वमसङ्गतमेव उक्तेषु नियमेषूक्तसङ्कोचाकारत्वाभावेन सार्वधातुकार्धधातुकाव्यवहितपूर्वत्ववदागमाव्यवहितपूर्वत्वविशिष्टेक्त्वस्य च तत्त्वेन तदवच्छिन्नातिरिक्तत्वेन संकोचाच्चिधातोः क्विपि तुक्यचारक्विबन्तान्नटि अपि चेततीत्यादौ गुणो न स्यात् तस्मात् पूर्वोक्तन्यास एव रमणीयः ।

(६७) यत तु 'रि च' इति सूत्रं मास्तु रौ रसौ स्वादिषु परयोर्भवितारौ भवितार इत्यत्र 'स्वादिष्वसर्वनामस्थाने' इत्यनेन तासः पदसंज्ञया सकारस्य रुत्वे 'रो रि' इति लोपेनेष्टसिद्धेरिति तन्न पक्तारो भवितार इति यस्मिन् व्यापारे इति विग्रहे मयूरव्यंसकादित्वात् समासे तत आख्यानणिचि लुङि च्लेश्चङि द्वित्वे 'रो रि' इत्यस्यासिद्धत्वेनोपधाह्रस्वो न स्यात् ।

(६८) 'लोट् च' अत्र 'ङ्लोट्' विधानेन ङित्त्वात् तामादयष्टित्त्वात् 'टित आत्मनेपदानां' इत्येत्वे सिद्धे 'लोटो लङ्वत्' इति मास्त्विति केचित् । तन्न 'लोटो लङ्वत्' इति 'आतिदेशिकमनित्यम्' इति ज्ञापनार्थं तेनाजुहवुरित्यत्र 'सिजभ्यस्त' इति जुस् न । यत् तु 'विदो लटो वा' इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणेन दोषाभाव इत्यपि न व्यवस्थितविभाषापरिगणने भाष्येऽस्यागणनात् । इतरदोषस्याभावेऽपि लोट्घटितानेकसूत्रेषु ङकारपाठेन लाघवाभावाच्चेत्यलम् ।

(६९) 'सेर्ह्यपिच्च' अत्र 'सेर्हिङ्' इत्येवास्तु मास्त्वपिच्चेति केचित् । न च 'ङिच्च' इति परिभाषया सेरिकारस्य हिङादेशे सकारश्रवणेनानिष्टापत्तिरिति वाच्यम् । तातङादेशवद्धिङादेशेऽपि सर्वादेशविधायकेन 'ङिच्च' इत्यस्य बाधात् सर्वादेशेनेष्टसिद्धेः । परे तु सिद्धान्तेऽपिद्ग्रहणात् पित्त्वेनानुदात्तत्वेः स्थाने जायमान आन्तरतम्यात् प्राप्तोऽप्यनुदात्तो न भवतीदानीं स्यात् तदर्थं यथान्यासमेव साध्वित्याहुः ।

'ङिच्च पिन्न' इति भाष्यात् स्थानिवत्त्वप्रयुक्तमनुदात्तत्वमादेशे ङिति नेति न्यासः सुवच एवेत्यपरे ।

( ७० ) 'आडुत्तमस्य पिच्च' अत्र 'अपुत्तमे' इत्येव सूत्रमस्तु लोडुत्तमे परेऽगागम इति सूत्रार्थः । एवं चादानील्यादावगागमे 'अतो दीर्घो यञि' इति दीर्घे 'आगमानुदात्तः' इत्यनुदात्तत्वे च सिद्धे व्यर्थमाड्ग्रहणं पिद्ग्रहणं चेति चेन्न देहानीत्यादावकोऽङ्गावयवत्वेनेकारे उपधात्वाभावात् 'पुगन्त' इति गुणानापत्तेः । ऊर्णवाव ऊर्णवामित्यादौ 'सार्वधातुकमपित्' इत्यादिना वस्मसोरपित्वाद्ङित्त्वेन गुणनिषेधापत्तेश्च । न च तदर्थं धातोर्विकरणोऽट्प्रत्यय उत्तमे पर इत्यर्थको 'अडुत्तमे' इत्येव न्यासोऽस्तु तथा चाटि परे एव देहानीत्यादौ गुणेनेष्टसिद्धेरिति वाच्यम् । आगमत्वाभावेन प्रभवानीति रूपानापत्तेरिष्टस्वरानापत्तेश्च सिद्धान्ते तु 'आगमजमनित्यम्' इति परिभाषयाऽऽटोऽभावेनानीत्यस्याभावात् 'आनि लोट्' इत्यनेन णत्वं न भवति सांप्रतं नेरेवार्थवत्त्वेन 'आनि लोट्' इत्यत्रापि 'निलोट्' इत्यस्य कर्त्तुमुचिततया प्रभवानीत्यत्र णत्वं दुर्वारमेव 'आगमजमनित्यम्' इति परिभाषाया निर्मूलत्वापत्तेश्च । यथा न्यासे 'आनि लोट्' इति सूत्रस्थाकारोच्चारणमेवात्र मानम् । इदानीं नेरेवार्थवत्त्वेनानिलोडित्यत्रापि 'नि लोट्' इत्यस्य कर्त्तुमुचिततया ज्ञापकतानुपपन्नैव स्यादित्यलम् ।

( ७१ ) 'इतश्च' 'नित्यं ङितः' । इत्यनयोः 'इतश्च' इति नकार्यं 'इतश्च' इत्यस्योत्तरत्र 'तस्थस्थमिपाम्' इत्यादावनुवृत्तिरपि न फलाभावादनन्वयाच्च 'नित्यं ङितः' इत्यत्रापि 'स उत्तमस्य' इति पूर्वसूत्रानुवृत्तिर्न कार्या 'इतश्च 'लोपः परस्मैपदेषु' इत्यतः परस्मैपदेष्वित्यस्य सम्बन्धः । 'वेतोऽन्यत्र' इत्यस्मादित्यस्यानुवृत्तिर्न नित्यग्रहणात् तथा च 'इतश्च' इति न कार्यं 'नित्यं ङित' इत्यनेन ङितः परस्मैपदानां नित्यं लोप इत्यर्थेन 'अलोन्त्य' परिभाषयेकारसकारयोर्लोपेनैवेष्टसिद्धेः । न चैवं सति तसादावपि लोपापत्तिस्तत्र 'तक्रन्यायेन 'तस्थस्थमिपाम्' इत्यनेनास्य लोपस्य बाधादिष्टसिद्धेः ।

(७२) 'यासुट् परस्मैपदेषु' । अत्र 'यासुरस्मैपदेषु' इत्येवास्तु न्यासः सकारस्येत्संज्ञया 'तिङ् शित्' इति सार्वधातुकत्वे 'सार्वधातुकमपित्' इति ङित्त्वमपि यपि कृते भवेदित्यादीष्टसिद्धेः । न चात्र

सूत्रे लिङा धातोराक्षेपेण श्रपि कृते इयासूनिरवकाशत्वेन 'सत्यपि सम्भवे बाधनम्' इति न्यायेन श्रपं बाधित्वा इयासि शवनस्यात् तथा च भवेदित्यादि न सिद्धेरदिति वाच्यम्। आक्षिप्तस्य शाब्दबोधेऽन्वये तु 'सत्यपि सम्भवे' इति न्यायस्यानित्यत्वे तेन यत्र बाधस्तत्रापि क्वचिदुत्सर्गाः प्रवर्त्तन्ते तेन प्रकृते इयासि कृते श्रप् भविष्यतीत्यदोषात्। तदनित्यत्वे 'सोऽचि' इत्यादिनिर्देश एव ज्ञापकः, अन्यथा त्यदाद्यत्वाप्राप्तियोग्येऽचरितार्थमत्वेकृतेऽपि सत्वप्राप्त्या सत्वं त्यदाद्यत्वापवादकमतस्तद्विषयेऽत्वाप्राप्त्या सद इति स्यात् तदनित्यत्वे इष्टं रूपं भवति 'किदाशिषि' इत्यस्यानन्तरं 'लिङ्याशिष्यार्धधातुकम्' इति कर्त्तव्यम् पूर्वसूत्रात् पदद्वयमनुवर्त्त्याशिषि लिङि परे इयास् आर्धधातुकसंज्ञ इत्यार्धधातुकसंज्ञाविधानसामर्थ्यात् श्यासो धात्वधिकारोक्तत्वाभावेऽपि आर्धधातुकसंज्ञा भवतीति 'भवतेरः' इत्यादिनिर्देशात् कर्त्रर्थे कत्वाभावेऽपि क्वचित् सार्वधातुके शब्भवतीति ज्ञापनात्तेन निरर्थकश्यासि परेऽपि शप्सिद्धेः। एवं च जागर्यादित्यादावपि विशेषविहितेन कित्त्वेनातिदेशिकस्य 'सार्वधातुकमपित्' इति ङित्त्वस्य बाधोऽतो ङिन्निप्रतिषेधविषये त्वादगुणः सिद्धः समाधानं विभावयन्तु सुधिय इत्यलम्॥ १॥ अत्रैव सूत्रे 'ह्यासुट्परस्मैपदेषूदात्तः' इत्येव तु न सूत्रितम्। तथा सति 'किदाशिषि' इत्यातिदेशिकस्य कित्वस्येज्यादित्यादौ संप्रसारणसम्पादनेन चारितार्थ्यात् जगर्यादित्यादौ औपदेशिकङित्त्वस्य विशेषविहितेनातिदेशिकेन कित्त्वेन बाधस्य वक्तुमशक्यत्वात् ततश्च 'जाग्रोवि' इति सूत्रेण गुणो न स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये चेति सिद्धात् मम तु नायं दोषः आतिदेशिकेन विशेषविहितेन कित्त्वेनातिदेशिकस्य ङित्त्वस्य बाधो वक्तुं शक्यते। न चैवमपि 'यासुटि' कृते 'किदाशिषि' इति सूत्रं मास्त्विति महल्लाघवम् विधिलिङ्यपि वचनात् जागर्याच्चेत्यादौ संप्रसारणगुणौ स्यातामित्यलं बहुना॥ २॥

(७३) 'इजादेश्च गुरुमतः' अत्र 'गुर्वादेरनृच्छ' इति न्यासः सुवचः। गुरुसंज्ञकवर्णाद्यवयवकादृच्छतिभिन्नाद्धातोराम्स्या लिटीति तदर्थः। न चापूलुयामासेत्यस्य गुर्वादित्वेन तस्माल्लियाम् स्यादिति वाच्यम्। 'दयायासश्च' इत्यनेनासधातोराम्विधानसामर्थ्यादाकारादश्चेदास्धातोरेवेति नियमेन दोषाभावात्। न चासेरौपदेशिका-

कारगुर्वादित्वेन एतद्विषयकनियमे आश् प्रभृतितोऽप्याम् स्यादिति वाच्यम् । लाघवेन सामान्यनियमाश्रयणेनादोषात् । वस्तुतस्तु 'गुर्वादेः' इत्येवास्तु नियमादिकं पूर्ववत् । आनर्छेत्यादौ प्रतिपदोक्तत्वादपवादत्वाद्वा गुणे कृते संयोगसंज्ञा ततः 'संयोगे गुरुः' इति गुरुसंज्ञा । तस्याः सन्निपातविघातके आम्यनिमित्तत्वेन न कश्चित् दोष इत्यलम् ।

(७४) 'इट ईटि' । अत्र 'सेट ईटि' इत्येव कर्त्तव्यः सेटः सस्य लोपविधानेनातोदित्यादिलक्ष्यसिद्धौ सिज्लोपे दीर्घविधौ सिज्लोपस्य सिद्धत्वसम्पादनाय 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वार्त्तिकमपि नादर्त्तव्यं फलाभावादिति महल्लाघवम् । अत्र केचित् कृष्णशब्दात् क्यङि ततः कर्त्तरि क्विपि अल्लोपयलोपयोः 'निमित्तापाय' इति न्यायेन क्यङ्निमित्तकदीर्घनिवृत्त्या तत आचारक्विपि लुङि च्लौ सिचि अकृष्ण इम् ईत् इति दशायां प्रथममन्तरङ्गत्वादकारेकारयोर्गुणे 'अन्तादिवच्च' इत्यनेन एकारे इट्त्वात् सलोपेऽकृष्णे ईत् इति रूपं जायते अत्रायादेशस्यैकादेशत्वाभावाद्वार्त्तिकाप्रवृत्त्या सिज्लोपस्यासिद्धत्वादयादेशो न न्यासे एकारविशिष्टस्य लोपेऽकृष्णीदित्यनिष्टापत्तेरित्याहुः । तदन्ये न मन्यन्ते अकारेकारयोर्गुणे इसि 'अतो लोपः' इत्यल्लोपे च प्राप्ते 'वार्णादाङ्गम्' इति परिभाषयाल्लोपे सलोपदीर्घे सेटः सस्य लोपे चाकृष्णीदित्यस्यैव सम्भवेनादोषात् ।

(७५) 'वदव्रजहलन्तस्याचः' । अत्र 'वदव्रजोरचः' इत्येव सूत्रमस्तु मास्तु हल्ग्रहणम् वद-व्रज्योर्यस्य कस्यचिदङ्गस्य चाचो वृद्धिः परस्मैपदे परे सिचीति सूत्रार्थः । 'अतो हलादेः' इत्यस्य बाधनाय वदव्रज्योरुपादानम् । अजन्ताङ्गस्य वृद्धिरिति तु नार्थः इकारान्तादौ सिचि वृद्धिरिति वृद्धिविधानस्य वैयर्थ्यात् । अकारान्ते अचिकीर्षीत् अजिहीर्षीत् इत्यत्र तु परत्वादतो लोपेन बाधात् आकारान्ते अवासीदपासीदित्यत्र तु फलाभावादेव न वृद्धिः । सन्नन्तस्य अपिपठिषीदित्यत्र ' अनन्त्यविकार ' इति परिभाषया न दोष इति चेन्न रुन्धधातोररान्त्सीदित्यत्रानेकव्यवधाने वृद्धिर्न स्यात् हल्ग्रहणे तु ' वर्णग्रहणे जातिग्रहणम्, इति परिभाषाज्ञापनद्वारानेकव्यवधानेऽपि वृद्धेरिष्टत्वात् ।

(७६) 'णलुत्तमो वा' । ननु 'अत उपधाया' इत्यस्याग्रे 'उत्तमो

वा' इति सूत्रमस्तु मास्तु 'णलुत्तमो वा' इति विशिष्टसूत्रम् । पूर्वसूत्र-ञ्णितीत्यस्यानुवृत्त्योत्तमे ञ्णिति वा वृद्धिरित्यर्थात् चकार चकरे-त्यादीनां सिद्धेरिति चेन्न अत्र पूर्वयोगादत इत्यनुवर्त्तते न वा आद्ये लुलाव लुलुवेत्यत्रोपधाभूताकाराभावात् 'अचो ञ्णिति' इति नि-त्यवृद्ध्यापत्तेः। न च वृद्धेः परत्वात् सार्वधातुकेति गुणेऽन्तरङ्गत्वादवा-देशे 'उत्तमो वा' इत्यस्य प्रवृत्त्या इष्टसिद्धेरिति वाच्यम् । 'वार्णा-दाङ्गम्, इति परिभाषयाऽवादेशापेक्षया 'अचो ञ्णिति' वृद्धेर्बलवत्त्वेन गुणोत्तरमवादेशं वाधित्वा वृद्धौ रूपद्वयासिद्धेः । यत् तु 'अचो ञ्णि-ति' इति सूत्रमपि मास्तु अस्तु च 'अत उपधायाः' इत्यत्रैव ञ्णिति पदं 'गोतो णित्' इत्यत्रास्तु 'ओतो वृद्धिः' इति सर्वनामस्थाने ओकार-स्य वृद्धिरित्यर्थः। तत एव वृद्धिरित्यस्य 'सख्युरसम्बुद्धौ' इत्यत्र सम्बन्धेन निर्वाहे प्रकृते गुणेऽवादेशे 'उत्तमे वा' इति वृद्धिविकल्पेनेष्टसिद्धिरिति तदपि न तथा सति रै-भू-शब्दाण्णिचि इष्ठवद्भावे 'प्रकृत्यैकाच्' इति प्रकृतिभावे 'अचो ञ्णिति' इति वृद्धौ राययति भावयति एवं प्रिय-शब्दाण्णिचि तस्मिन् प्रिय इत्यस्य प्रादेशे प्रकृतिभावे वृद्धौ पुकि प्राप-यतीत्यादिप्रयोगाणामसिद्ध्यापत्त्या 'अचो ञ्णिति' इत्यस्यावश्यकर्त्तव्य-त्वात् । एवं च लुलावेत्यादिपूर्वदोषस्य चुकुट चुकोटेत्याद्यसिद्धिरूप-दोषान्तरस्य च सत्त्वाद्यथान्यासमेव रमणीयमिति। तथा हि सिद्धान्ते कुटधातोरुत्तमपुरुषे णलि 'णलुत्तमो वा' इति वैकल्पिकणित्त्वे तत्पक्षे चुकोट तदभावे चुकुट इति भवति कुटादिप्रयुक्तङित्त्वे ञ्णिङ्गिन्न इति पर्युदासात् तदभावपक्षे तत्प्रवृत्त्या च गुणतन्निषेधस्य च सत्त्वादिति भावः । न्यासेऽदुपधत्वाभावादनेन वृद्धेरप्राप्त्या णलो णित्त्वेन ङित्त्व-स्याप्राप्त्या च गुणे चुकोटेत्येकमेव रूपमेवं गुधातोर्जुगवेति स्यात् । अन्त्ये इक् परिभाषोपस्थितौ जगाद जगदेति रूपद्वयं न सिद्धेरदिकोऽ-भावात् । तस्माद्यथोक्तमेव रमणीयमित्यलम् ।

(७७) 'अञ्चुगतिपूजनयोः'। अत्र 'अञ्चु गतौ' पूजार्थे 'अचि' इति धातुपाठेन गतौ नलोपस्य पूजार्थे इदित्त्वात् तदभावस्य च सिद्धौ 'नाञ्चेः पूजायाम्' इति किमर्थमिति चेन्न 'उगिदचाम्' इत्यत्राञ्चुग्रहणनियमे नाञ्चुधातोः पूजायामप्युगित् कार्यं भवति तदिदानीमुगित्त्वाभावेन न स्यादिति यत् तदपि न नलोपनिर्देशेन नलोपप्रसक्ति विषयकनियमेन पू-जार्थे उगित्त्वप्रयुक्तकार्यस्यालाभात् । यत् तु सिद्धान्ते पूजायामप्युदित्त्वेन

'उदितो वा' इति क्त्वायां वैकल्पिकेटा पक्षित्वा अङ्क्त्वेति निष्ठायां 'यस्य विभाषा' इतीड्निषेधेऽङ्क्त इति प्राप्नोति तत्रोभयत्र नित्येडर्थम् 'अञ्चेः पूजायाम्' इति सूत्रं तदिदानीमुदित्त्वाभावेन विकल्पनिषेधयोरप्राप्त्या धातोस्य सेट्त्वेन स्वत एव नित्येटः प्राप्त्या 'अञ्चेः पूजायाम्' इति व्यर्थमिति तदपि फलाभावान्मास्त्वपरलाघवस्यैव संभवेन न्यासेऽनुकूलतायां एव सत्त्वात्। यत् तु सिद्धान्ते पूजार्थकस्याप्युगित्त्वेन ततः क्विनि प्राङ् तस्य लक्ष्मीवाचकेकारशब्देन समासे प्राञ्चीति ततस्तरपि 'उगितश्च' इति ह्रस्वविकल्प इष्टस्तदिदानीं न सिद्ध्येत् अत्र 'उगिदचाम्' इति नियमेनापि न निर्वाहो धातोः कार्याभावादित्याहुस्तदपि न 'उगितश्च' इति सूत्रभाष्यादुगितो विहितस्येत्यर्थेन इषुमतोऽपत्यं स्त्री ऐषुमती ततस्तरपि नित्यह्रस्वस्यैवोक्तेः। तस्मादग्राकुलं गच्छतीत्यर्थेऽञ्चितं गच्छतीत्यादौ प्रयोगेण पूजाप्रतीतौ गत्यर्थकेऽपि नलोपाभावाय सूत्रावश्यकत्वस्य 'नाञ्चेः पूजायाम्' इति सूत्रशेखरतः 'अञ्चोऽनपादाने' इति भाष्यकैयटाभ्यां च लाभाद्यथान्यासमेव सुन्दरमिति।

(७८) ऋतेरीयङ्। अत्रेयङित्यत्र 'ङ्य'-प्रत्यय एवास्तु 'अकृत्सार्वधातुकयोः' इति दीर्घे ऋतीयते इत्यादिसिद्धेः किमर्थं दीर्घईकारघटितगुरुनिर्देश इति अत्र शेखरे कमेर्णिङिति साहचर्यात् तान्त इका निर्दिष्टो न त्विकारान्तो ङ्यप्रत्यये 'अकृत्सार्वधातुकयोः' इति दीर्घेण सिद्धे ईयङ्करणादित्युक्तम्। एवं चेकारान्त एव न भवति क्व दीर्घस्य वार्त्ताऽपि। अत एव 'वश्चिलुञ्चृत' इत्यत्र ऋत इति सङ्गच्छते। अन्यथेकारविशिष्टनिर्देशेनासङ्गतिः स्पष्टैव। अत्र केचित् ईयङि करणे 'वार्णा'-परिभाषया वातप्रम्यि निन्यिव निन्यिमित्यादाविव 'एरनेकाचः' इति यणादेशः सवर्णदीर्घबाधात् इतीकारान्तपक्षे ऋत्यत इति प्राप्नोति ङ्ये तूक्तरीत्या ऋतीयत इति लुञ्चृत इति निर्देशस्तु एकदेशस्यानुकरणेनापि संभवतीतीयङ्करणस्याभिमतार्थज्ञापकत्वं न संभवतीति समीरते। अत्रापरे 'कुोः' इति सतुङ्निर्देशेन 'वार्णा'—परिभाषाया अनित्यत्वबोधनात्। 'ऋतनं च ऋतीया च हृणीया च घृणार्थकाः' इत्यत्र ऋतीयेत्यादिलक्ष्यदर्शनाच्च परिभाषामादायानिष्टापादनस्य 'ङ्याप्' सूत्रभाष्यादवहेलितत्वाच्चोक्तपरिभाषाया अप्रवृत्त्याऽन्तरङ्गत्वेन दीर्घे ऋतीयते इत्यस्यैवेष्टत्वेन ज्ञापकतायां न संशयावसर इति समादधिरे। तदुभयमपि तत्त्वविदो न क्षमन्ते। 'एरनेकाचः'

इति यणः सवर्णदीर्घापवादस्याशक्यप्रतीकारत्वेनोक्तलक्ष्यप्रामाण्यस्य लक्षणैकचक्षुर्भिराश्रयितुमशक्यत्वेन चोक्तदूषणसमाध्योरसङ्गतत्वात्। ननु तर्ह्येवमपवादत्वे नैव ज्ञापकता दत्ताञ्जलितामाप्नोतीति चेत् सत्यम्। अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते इति न्यायेनौपदेशिकधातुत्ववति ऋतावन्तरङ्गेण सवर्णदीर्घेणान्यत्र चरितार्थस्य यणो बाधात् ज्ञापकतायां न क्षतिरिति विभावयन्तु विज्ञाः।

(७९) यत् तु 'अर्तिह्री' इति सूत्रेण णेः पुडागम एवास्तु पुड्विशिष्टे-'यदागम'-न्यायेनार्धधातुकत्वात् क्नोपयतीत्यादौ 'सार्वधातुकार्धधातुकयोः' इत्यनेनैव गुणे सिद्धे 'पुगन्त इति सूत्रे पुग्ग्रहणं न कर्त्तव्यं भवति प्रणिदापयतीत्यत्र 'यदागम'-न्यायं विनैवेष्टसिद्धिरिति महल्लाघवम्' तच्च प्रणिदापक इत्यादौ 'यदागम'-परिभाषया पुड्विशिष्टस्य णित्वेन 'णेरनिटि' इति णिलोपापत्तेः 'निर्दिश्यमान'-परिभाषया तद्वारणेऽपि वलादित्वादिडापत्तिर्दुर्वारैव। यत् तूक्तदोषवारणाय प्रबादिवद्विकरणमेव पुप् विधेय इति तस्यापि यदि धात्वधिकारे पाठस्तर्ह्यार्धधातुकसंज्ञयोक्तेडापत्तिस्तदवस्थैव यदि तदतिरिक्ते पाठस्तर्ह्यार्धधातुकत्वाभावेन क्नोपयतीत्यादौ गुणासिद्ध्या तदर्थं पुगन्तग्रहणस्य तत्र कर्त्तव्यतया लाघवाभावः। यदप्येतदर्थं 'सार्वधातुक' इति सूत्रे पकारोऽपि पाठ्यः पकारे सार्वधातुकार्धधातुकयोश्चेगन्ताङ्गस्य गुण इत्यर्थात्दर्पयतीत्यादेः सिद्धिरिति तदपि न क्नोशब्दस्य इप्शब्दसमवधाने दीर्घे पकारे परे गुणापत्तेः। सार्वधातुकादिसाहचर्यात् 'प्रत्ययाप्रत्यय' इति परिभाषया वा प्रत्ययस्यैव तस्य ग्रहणेनादोषात्। यदपि पुपः 'तिङ्शित्' इत्यत्र पाठेन सार्वधातुकसंज्ञया तस्मिन् गुणे इड्भावे च सिद्धे न कोऽपि दोष इति तदपि न यङ्लुगन्तात् द्राङ्त्यादेर्णिचि पुपि 'यङो वा' इति पुपः इड्विकल्पापत्तेर्यङन्तात् परस्य हलादेः पित्सार्वधातुकस्य पुपः सत्त्वात्। येऽपि यङ्लुकश्छान्दसत्वाद्दारयन्ति तेषामपि क्नोशब्दात् 'प्रातिपदिकात्, इति णिचि पुपि क्नोपयतीति गुणापत्तिर्दुर्वारैव सिद्धान्ते णिचः प्रातिपदिकाद्विहितत्वेनार्धधातुकत्वाभावान्न भवति 'सार्वधातुकार्धधातुकयोः' इत्यत्र पुपः पाठेऽप्ययं दोषः। केचित् तु अर्त्यादिसाहचर्यादौपदेशिकगणपठितस्यैव क्नोधातोर्ग्रहणेन प्रातिपदिकाण्णिचि पुप्युक्तप्रयोगस्यैवाभावान्नोक्तदोष इति वदन्ति तदपि मन्दम्। उक्तसाहचर्येण तद्वारणे प्रादन्तांशेऽपि साह-

चर्यपरिभाषा प्रवृत्त्या वृद्धादिशब्दाण्णिचीष्ठवद्भावे वृद्धस्य ज्यादेशे प्रकृतिभावे 'अचो ञ्णिति' इत्यकारस्य वृद्धौ पुकि पुपि वा ज्यापयति प्रापयतीत्यादिप्रयोगानापत्तेः। ऋट-इत्यादेः प्रातिपदिकस्यापि सत्त्वेनार्त्यादेर्धातोरेव ग्रहणे प्रमाणाभावेन 'साहचर्य'-परिभाषाया एवाप्रवृत्तेश्च। धात्वधिकारे पाठादिडापत्तिवारणाय पश् इत्युक्तौ च शित्त्वात् सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्त्वेन क्नोपयतीत्यादौ गुणनिषेधेनाव्याप्तेः। ज्यापयतीत्यादौ 'ग्रहिज्या' इति संप्रसारणादिनाऽतिव्याप्तेश्च। घ्रापयतीत्यादौ जिघ्रादेशादिदोषस्तु न तत्रादिशिदित्युक्तेः। एतदर्थं श्पप् इत्युक्तौ तु पित्त्वेन ङित्त्वाभावादिट्सम्प्रसारणादीनां वारणेऽपि जिघ्रादेशादिदोषस्य तादवस्थ्यात्। पपृश् इत्युक्तौ तु यद्यपि शित्त्वेन सार्वधातुकत्वादिडभावे पित्त्वेनाङित्त्वात् सम्प्रसारणाभावे आदिशित्त्वाभावेन जिघ्रादेशाभावे सिद्धेऽपि परन्तु प्रत्ययादिपकारस्येत्संज्ञैव दुर्लभा तदर्थं यदि 'चुटू' इत्यत्र पकारघटित-'चुटुप्' इति न्यासे प्रत्ययादिचवर्गटवर्गपकाराणामित्संज्ञेति तदर्थाद्यद्यपि पकारस्यापि सा सुलभा परन्तु पाशवादिप्रत्ययादेरपि पस्येत्त्वापत्तेः। यदि तु 'लशक्वतद्धिते' इत्यत्र 'लशप्क्वतद्धिते' इत्युच्यते तर्हि न कुत्रापि दोषो न्यासः सुवच इत्यपि न अतिष्ठिपत् अदिद्रपदित्यादौ 'तिष्ठतेरित्' 'णौ चङि' इति इद्ध्रस्वत्वयोरनापत्तेः। स्थाद्राघटकाकारस्योपधात्वाभावात् अर्थवत्समुदायघटकान्त्यालव्यवहितपूर्वतत्समुदायघटकवर्णस्यैव तत्संज्ञात्वात्। पुप् पप्शादिविशिष्टेऽर्थवत्त्वाभावात्। यदत्र केचित् विकरणस्यार्थस्यानुक्त्या प्रकृत्यर्थेनैवार्थवत्त्वम् 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इत्यभियुक्तोक्तेः तथा च पुप् विशिष्टेऽर्थवत्त्वमस्त्येवेति तदपि न प्रकृतिप्रत्यययोरर्थेनार्थवत्त्वे संभवति लाघवात् प्रत्ययार्थेनैवार्थवत्त्वस्य युक्तत्वात् प्रकृतेर्बहुत्वात्। पुकि तु 'आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वम्' इत्यस्य भाष्यादितो लब्धस्य सत्त्वात्। परे तु 'णौ चङ्युपधायाः' इत्यारभ्य 'जिघ्रतेर्वा' इत्यन्तेषु सूत्रेषूपधाग्रहणमपि न कार्यम्। 'णौ चङि' इत्यादौ ह्रस्वविधानेन 'अचश्च' इति परिभाषोपस्थितौ तदन्तविधिनाऽजन्ताङ्गस्येति तु नार्थोऽसंभवात् चङ्परेणावित्यस्य निर्दिश्यमानेऽन्वयेन चङ्परेणावङ्गस्याचो ह्रस्व इत्यर्थेनाङ्गावयवस्य सर्वस्याचो ह्रस्वे प्रसक्ते 'येन ना' इति न्यायेनैकवर्णव्यवधाने एव स्यात्

तिष्ठतेरित्यादेरपि पकारविशिष्टस्य स्थात्वाभावेन तद्रहितस्य चङ्परकणिपरत्वाभावेनोक्तन्यायादेवैकवर्णव्यवायेऽपि तत्प्रवृत्तेरलोऽन्त्यपरिभाषयोपान्त्यस्याकारस्यैव स्यात् तथैवेष्टमपीति नोक्तन्यायेऽतिष्ठिपदित्यादौ दोष इति वदन्ति। यत् तु क इवाचर्यं क अइवाचर्य-अ 'क-अ' इति यस्मिन् व्यापारे इति विग्रहे एचोडादित्वात् समासे दीर्घे का इति तत आख्यानणिचि क्विपि टिलोपे प्राप्ते तस्यापवादे प्रकृतिभावे आदन्तात् पुकि कौ णिलोपे 'अन्तादिवच्च' इत्यनेन पूर्वोत्तरपदवृत्तेस्तिङन्तत्वस्यैकादेशविशिष्टे 'यदागम'-न्यायेन पुगन्ते चातिदेशात् काप् गच्छतीत्यादौ 'तिङतिङः' इति निघातो न भवति पर्प्राप्ति तु स्यात् तस्य विकरणत्वेनागमत्वाभावादुक्तन्यायेन विशिष्टे तिङन्तत्वानतिदेशात् अपि तु सामासिकप्रातिपदिकनिमित्तकसुपा सुबन्तत्वात्। णिलोपस्य स्थानिवत्त्वे तु न 'कौ लुप्तम्' इति निषेधादित्याहुः। तदपि न 'कास्प्रत्ययात्' इत्यादिसूत्रभाष्यत एकाज्भ्यः क्विपोऽनभिधानस्य लब्धतयोक्तप्रयोगस्यैवाभावादित्यलम्।

(८९) 'ओः पुयण्ज्यपरे' नन्वत्र 'पुयण्ज्यपरे' इत्येवास्तु मास्तु ओर्ग्रहणम् न चैतद्ग्रहणाभावेऽकारादीनामपीत्वं स्यादिति चेन्न तथा हि वर्गप्रत्याहारजग्रहस्य णिच्चादेशो न द्वित्वे कर्त्तव्ये इत्यत्र ज्ञापकतापूर्ववत् अवर्णपरकपवर्गादिपरकाभ्यासावय[illegible]कारस्य पिपक्षति यियक्षतीत्यादावित्वप्राप्तिरिष्टैव तादृशश्चेकारोऽसम्भवः, उकारेत्वप्रवृत्तिरिष्यत एव तादृशौ ऋकारऌकारौ न स्त एव वेञ्-पै-रै-धातुभ्यः सनि प्रागेव 'आदेच्' इत्यात्वेनाभ्यासेकारस्यैव सम्भवेन तद्व्यावृत्तिरपि न ओरित्यस्य फलमित्यवशेषादुकारस्यैवेत्वस्य सत्वात्। न च पापचिषते वावचिषते इत्यादौ यङन्तात् सनि यङ्निमित्ताभ्यासावयवाकारस्यान्तरङ्गत्वात् 'दीर्घोऽकितः' इति दीर्घे कृतेऽनेनेत्वं स्यात् तद्वारणाय तस्यावश्यकत्वमिति वाच्यम् सनि परे सन्निमित्तकाभ्यासावयवस्यैवेत्वमित्यस्य प्रत्यासत्त्या कल्पनेन समाधातुं शक्यत्वात्। एवं तर्हि द्विर्वचननिमित्ताङ्गाभ्यासावयवस्य द्विर्वचननिमित्तकं कार्यं तन्निमित्तकाभ्यासस्यैव भवतीति प्रत्यासत्तिलभ्य एवार्थे प्रकृतसूत्रस्थस्यौरित्यस्य ज्ञापकतेति कल्पनायाः संभवात् तत्फलं तु जङ्गम्यादिभ्यो यङन्तेभ्यः 'सन्प्रत्यये जङ्गमिषत इ-

इति सूत्रे च प्रत्यासत्तिलभ्येन सन्निमित्तकद्वित्वनिमित्ताभ्यासावय-वस्येत्यर्थेनैव निर्वाहे तस्मात् सिद्धार्थे ज्ञापकतादानं पिष्टपेषणत्न-निष्फलमेवेति श्रोरिति हेयमेवेति वदन्ति।

(८१) 'इको झल्' 'हलन्ताच्च' इति सूत्रद्वयं न कार्यम् तदुभयो स्थाने 'इग्वतो झल्' इति विन्यस्यैव सर्वसामञ्जस्यात्। एवं हल्ग्रहणं जातिपरमित्यर्थज्ञापनेऽपि न यत्नान्तरस्यावश्यकता फला-भावात्। न च यियक्षत इत्यत्र 'सन्यतः' इतीत्वेनेग्वत्त्वस्य सत्त्वात् स-कित्त्वेन सम्प्रसारणं स्यादिति वाच्यम् सम्प्रसारणविधायकस्य 'वचि-स्वपि' इत्यस्य वच्यादिविहिते कितीत्यर्थस्य भाष्यसंमततयाऽ-कितस्तद्विहितत्वाभावेनादोषात्। यत् तु इग्वन्तधातुमुच्चार्य विहितो झलादिः सन् किदित्यर्थात् प्रकृते तत्त्वाभावान्नोक्तदोष इति. तन्न धिप्सतीत्यादाविग्वतो विहितत्वाभावेनाकित्त्वाद् गुणापत्तेः। उक्तार्थे प्रमाणाभावाच्च। वस्तुतस्तु विहितविशेषणाभावेऽपि धातोरित्यनुवर्त्ये-ग्वतो धातोरित्यर्थादुत्तरखण्डे एव सकलाभिमतधातुत्वस्य सत्त्वात् तस्य चेग्वत्त्वाभावात्। यियक्षत इत्यत्र कित्त्वाभावेन धिप्सतीत्यत्र तादृशस्योत्तरखण्डस्य सत्त्वात् कित्त्वेन च दोषाभावात् न्यासः सुवच एवेति। यत् तु 'लिङ्सिचावात्मनेपदेषु' इत्यत्राभ्यामेव सूत्राभ्यामिको हलन्ताच्चेत्यस्यानुवृत्त्या इक्समीपाद्धलः परस्यैव झलादिलिङः कित्त्वं भवति उक्तन्यासे इग्वत एवानुवृत्त्या नेषीष्टानैष्टेत्यादौ लिङादे कित्त्वेन गुणनिषेधापत्तिरिति तत्र तत्र हल्पदं निवेश्य हलः परस्य झलादिलिङः कित्त्वमित्यर्थेनादोषात्। न चायष्टेत्यत्र हलः परस्यो क्तसिचः सत्त्वेन कित्त्वात् संप्रसारणापत्तिरिति वाच्यम्। इग्वत इत्य-स्यापि सम्बन्धेनेग्वतो हलन्तादित्यर्थेन प्रकृते इग्वत्त्वस्य नैषीष्टे-त्यत्र हलन्तत्वस्याभावेनादोषादिति विद्वांसो विभावयन्तु।

सन्तः सन्ति न किं भुवि परभणितेर्गुणलवं समीक्ष्यापि।
मुदमुपगच्छन्त्यतुलं ये गुणनिकरं विलोक्यैव॥ १॥

